(vii)

## अध्यायन्द्वे विरूपेति माधवो व्याचिकीर्षति ।
## अन्वादेशस्य विषये वक्तव्यं सम्प्रदर्शयन् ॥

अस्येति प्रथमादेश उदात्तं स्मर्यते पदम् ।
अन्वादेशे चानुदात्तमस्य वामस्य दृश्यते ॥ १

अस्येदु मातुः सवने नन्वूदात्तोऽत्र दृश्यते ।
अस्मा अस्येति सूक्तेऽस्मिन्निन्द्र एवापदिश्यते ॥ २

ऋच्येतस्यामन्वादेश इति वक्तुन्न युज्यते ।
युञ्जन्त्यस्य काम्यया भिन्नायामपि दर्शनात् ॥ ३

नास्मै विद्युन्न तन्यतुर्नकिरस्य सहन्त्य च ।
एवा ह्यस्य सूनृता ऋचश्चात्र निदर्शनम् ॥ ४

दिवश्चिदस्य महिमा सूक्तादौ च प्रदृश्यते ।
अन्वादेशम्पूर्वसूक्ते स्तुतस्यैव पुनः स्तुतौ ॥ ५

अन्वादेशः पादमध्ये सर्वत्रेति न युज्यते ।
यस्मादुदात्ता दृश्यन्ते पादमध्येऽपि तद्यथा ॥ ६

माकिर्नो अस्य परिषूतिरग्ने चिकिध्यस्य नः ।
पादो ज्यायांसमस्येति सर्वे तत्र निदर्शनम् ॥ ७

पादादिष्वनुदात्तोऽस्य न कदाचन दृश्यते ।
उदात्ताः पादमध्येऽपि दृश्यन्ते वहवस्तथा ॥ ८

वाक्यादावपदिष्टोऽपि लौकिकैरपदिश्यते ।
उच्चैर्धर्मी ततस्तत्र नान्वादेशस्य सम्भवः ॥ ९

पूर्वस्मिन्प्रकृतो वाक्ये वाक्यमध्येऽपदिश्यते ।
नीचैरर्थस्वभावेन सोऽन्वादेशः स्मृतो बुधैः ॥ १०

इति

---

(viii)

# इदं श्रेष्ठमथाध्यायम्माधवो व्याचिकीर्षति ।
# रूपे भिन्ने स्वरे भिन्ने शब्दवृत्तिम्प्रदर्शयन् ॥



अर्थाभेदे तु शब्दस्य सर्वत्र सदृशः स्वरः ।
यदा नतं स्वरम्पश्येदन्यथार्थन्तदा नयेत् ॥ १

पुरूतमम्पुरूणामृग्भवेत्तत्र निदर्शनम् ।
तमप्चेदनुदात्तः स्यात्तथा ह्यन्यत्र दर्शनम् ॥ २

शुष्मिन्तमो हि ते मदो द्युम्निन्तम उत क्रतुः ।
नात्रोदात्तौ तमौ दृष्टौ दृश्यते तु पुरूतमे ॥ ३

बहून्गलपयतीत्यर्थस्तेन तत्र प्रदर्शितः ।
सर्वत्रैवं समानेषु स्वरेणार्थो व्यवस्थितः ॥ ४

होम गन्तारमूतये जेतारमपराजितम् ।
पाता सुतमिन्द्रोऽस्तु स चेत्ता देवता पदम् ॥ ५

इन्द्रो विश्वस्य दमिता भेत्ता पुरां शश्वतीनाम् ।
विभक्तारं हवामहे तृन्तृचोः स्युर्निदर्शनम् ॥ ६

तृन्तृचोश्चार्थभेदोऽयम्प्रकृत्यर्थः स्फुटस्तृनि ।
तृचि स्फुटः प्रत्ययार्थः प्रकृत्यर्थोपसर्जनः ॥ ७

लुङ्लङ्लृक्ष्वडुदात्तो यः स भूतार्थस्य सूचकः ।
वाचकान्प्रत्ययानाहुस्तत्राकारं स्फुटं वदेत् ॥ ८

नञमाहुरथैके तम्प्रतिषेधस्य सूचकम् ।
छान्दसेषु लकारेषु सम्प्रत्यर्थस्य सूचकः ॥ ९

अष्टके प्रथमेऽस्माभिः स्वर इत्थम्प्रपञ्चितः ।
स्थापनीयः प्रयत्नेन वाक्यार्थे पण्डितैरयम् ॥
अन्धकारे दीपिकाभिर्गच्छन्न स्खलति क्वचित् ।
एवं स्वरैः प्रणीतानाम्भवन्त्यर्थाः स्फुटा इति ॥

इति

—

# ऋग्वेदानुक्रमणी

ii

## आख्यातानुक्रमणी

( i )

द्वितीयोऽथाष्टकस्तस्मिन्नध्यायादिषु वक्ष्यते ।
यत्किञ्चिदिह वक्तव्यमाख्यातेष्वस्ति वैदिकैः ॥

चत्वारि पदजातानि तत्र नामानि कानिचित् ।
आख्यातान्युपसर्गाश्च निपाताश्च तथापरे ॥ १

शब्दैरुच्चरितैर्द्रव्यं यैरिह प्रतिपद्यते ।
तन्नाम कवयः प्राहुरग्निर्वायुस्तथाश्विनौ ॥ २

अष्टौ यत्र प्रयुज्यन्ते नानार्थेषु विभक्तयः ।
तन्नाम कवयः प्राहुर्लिङ्गसङ्ख्यासमन्वितम् ॥ ३

निर्देशः कर्म करणम्प्रदानमपकर्षणम् ।
स्वाम्यर्थोऽथाधिकरणं विभक्त्यर्थाः प्रकीर्तिताः ॥ ४

नामानि नमयन्त्यर्थम्प्रधानमिति नामता ।
कारकाणि च तान्याहुः क्रियाङ्कुर्वन्ति तानि हि ॥ ५

कारकाणाम्परिस्पन्दः फलस्यैकस्य साधकः ।
लोके पूर्वापरीभूतः क्रियेति व्यपदिश्यते ॥ ६

वदन्ति वैयाकरणा धातुवाच्याङ्क्रियाञ्च ताम् ।
कालः सङ्ख्या कारकञ्च प्रत्ययार्थाः प्रकीर्तिताः ॥ ७

आख्यातस्य च नाम्नश्च सम्बन्धात्स्वार्थदर्शिनः ।
उपसर्गा निपाताश्च न स्वतन्त्रा इति स्थितिः ॥ ८

आख्यातशब्देषु भवन्ति भेदा
धातुः क्रियामेकफलाम्ब्रवीति ।
अर्थे प्रवृत्तेऽविरते च धातो-
र्लट्स्मर्यते शब्दविद्भिः पुराणैः ॥ ९

सुतपात्रे सुता इमे शुचयो यन्ति वीतये ।
इत्याह गच्छतः सोमानृषिर्हस्तेन दर्शयन् ॥ १०

प्रतित्यश्चारुमध्वरङ्गोपीथाय प्र हूयसे ।
परा हि मे विमन्यवः पतन्ति वस्यइष्टये ॥ ११

तत्त्वा यामि ब्रह्मणा वन्दमान-
स्तदा शास्ते यजमानो हविर्भिः ।
तदिन्नक्तन्तद्दिवा मह्यमाहु-
स्तदयङ्केतो हृद आ विचष्टे ॥ १२

धात्वर्थस्य प्रवृत्तस्य मन्त्रेष्वेषु प्रतीयते ।
विस्पष्टं वर्तमानत्वमीदृशाः सन्ति चापरे ॥ १३



3 A

भवन्ती वर्तमानस्य सामीप्येऽपि प्रयुज्यते ।
अग्निमीळे पुरोहितं सुम्नाय वर्तयामसि ॥ १४

इहेन्द्राग्नी उप ह्वये सुते सोमे हवामहे ।
एते भवन्ति सूक्तादौ सूक्तान्तस्था इमे पुनः ॥ १५

अर्कैश्च नि ह्वयामहे तन्त्वा वयम्पतिमग्ने ।
वामवसे जोहवीमि बहवः सन्ति तादृशाः ॥ १६

अथापि वर्तमानत्वङ्क्वचिन्नैव विवक्षितम् ।
वायविन्द्रश्च चेतथो दक्षन्दधाते अपसम् ॥ १७

प्र चेतयति केतुना धियो विश्वा विराजति ।
सद्यो दाशुषे क्षरसि पादास्तत्र निदर्शनम् ॥ १८

एवं यदादियोगे च यं रक्षन्ति प्रचेतसः ।
यत्र ग्रावा पृथुबुध्नो यं यज्ञन्नयथा नरः ॥ १९

वेद मासो धृतव्रतो विवक्षापि च दृश्यते ।
यद्देवानाम्मित्रमहश्चरग्नेर्भ्राजन्ते अर्चयः ॥ २०

तथा तच्छब्दयोगे च स इद्देवेषु गच्छति ।
येषामिन्द्रस्तेजयन्ति पादौ तत्र निदर्शनम् ॥ २१

अथापि दृश्यते भूते कारमंशाय जिन्वथः ।
शत्रुन्न किला विवित्से आण्डा शुष्णस्य भेदति ॥ २२

कदा क्षत्रश्रियन्नरमावरुणङ्करामहे ।
प्रयुज्यते भवन्त्यत्र कदायोगे भविष्यति ॥ २३

न ता मिनन्ति मायिनो य ईङ्खयन्ति पर्वतान् ।
प्र वेपयन्ति पर्वतान्विविश्चन्ति वनस्पतीन् ॥ २४

विधापरा पदेष्वेषु बहवः सन्ति तादृशाः ।
इच्छन्तोऽपि न हिंसन्ति जातास्तेऽभीङ्खयन्ति च ॥ २५

दृश्यन्ते चास्य वामी ये वृत्तिभेदास्तथाविधाः ।
शब्दज्ञहृदयस्थास्ते शक्याः शब्दैर्न भाषितुम् ॥ २६

छन्दसोऽनुविधानाय यत्र भूतभविष्यतोः ।
लट्प्रयुक्तो न कालस्य विवक्षा तत्र विद्यते ॥ २७

कदादियोगे कालस्य भवत्यभिभवो यथा ।
अर्थस्वभावश्च तथा कालं वाक्येषु बाधते ॥ २८

इति

---

## (ii)

# सुषुम्ना यातमद्रिभिर्व्याचिख्यासति माधवः ।
# प्रदर्शयँल्लिटो वृत्तिम्परोक्षे तत्र लिट्स्मृतः ॥

भूतेऽनद्यतने चैव ये अग्नेः परि जज्ञिरे ।
इदं विष्णुर्विचक्रमे त्रेधा नि दधे पदम् ॥ १

उवासोषा उच्छाच्च नु ततक्षुर्मनसा हरी ।
दृश्यतेऽद्यतने चापि भूते तत्र निदर्शनम् ॥ २

रश्मिरस्याततानेति दिवादृष्टमपश्यतः ।
रश्मिश्च रात्रावपि तमेष चाद्यतनो मतः ॥ ३

अपरोक्षे च लिड्दृष्टो जुहुरे वि चितयन्तः ।
आ दृळ्हाम्पुरं विविशुः सहसानं ववन्दिम ॥ ४

कर्माणि यौवने चक्रे यानि वत्रिर्ऋषिः पुरा ।
तानि जीर्णः कथयति स्फुटा चात्रापरोक्षता ॥ ५

यद्वापरोक्षमात्मानम्प्रथमेनात्र निर्दिशन् ।
पुरुषेण परोक्षाश्च क्रियामप्यपदिष्टवान् ॥ ६

यत्रा नश्चक्रा जरसन्दृश्यतेऽत्र भविष्यति ।
यद्वा लिण्न्याय्य एवायन्देवैराप्तन्त्वनूद्यते । ७

सृजन्तो हि जगद्देवा मनुष्यस्य शतायुषः ।
जरामकल्पयन्तस्मादर्थो भूतोऽत्र विद्यते ॥ ८

यदा न शक्नुयान्न्यायाल्लिटं स्थापयितुन्तदा ।
वाक्यार्थानुगुणांस्तांस्तान्पण्डितोऽर्थान्प्रदर्शयेत् ॥ ९

इति

(iii)

## वसू रुद्रा पुरुमन्तू व्याचिख्यासति माधवः । प्रदर्शयँल्लुङोवृत्तिं लुङश्च तदनन्तरम् ॥

भूतेऽनद्यतने लङ्स्याल्लुङ्स्मृतोऽद्यतनेऽपि च ।
लिटः परोक्षे स्मरणाल्लङ्प्रत्यक्षेऽवशिष्यते ॥ १

लङिन्द्रो अस्मानरददपाहन्वृत्रम्परिधिम् ।
स्या वो मरुतः स्वधासीद्यन्मामेकं समदत्त ॥ २

किं यविष्ठो न आ जगन्तद्वो देवा अब्रुवंश्च ।
प्रत्यायं सिन्धुमा वदन्नुपतिष्ठन्त गिर्वणः ॥ ३

प्रत्यक्षाण्येव सर्वाणि परोक्षे चापि दृश्यते ।
इन्द्रस्य नु वीर्याणीति सूक्तन्तत्र निदर्शनम् ॥ ४

कर्मणामत्र पारोक्ष्यश्चकारेति प्रदर्शितम् ।
एवञ्च सर्वे सूक्तस्थाः परोक्षाः स्युरमी लङः ॥ ५

परोक्षे लोकविज्ञाते प्रयोक्तुर्दृष्टिगोचरे ।
लङ्कात्यायनो ब्रूते जिहीत पर्वतो गिरिः ॥ ६

परोक्षे लोकविज्ञाते बहवो वैदिका लङः ।
प्रयोक्तुर्दर्शनायोग्ये विषयेऽपि स्थिता इति ॥ ७

अधारयन्त वह्नयोऽभजन्त सुकृतयया ।
घनो वृत्राणामभवः सद्यो वृद्धो अजायथाः ॥ ८

शक्नुवन्त्यृषयो द्रष्टुमतोऽदर्शनगोचराः ।
लङोऽपि च समीचीना इति केचिदवस्थिताः ॥ ९

दृश्यतेऽद्यतने चापि लङायमद्य सुकृतम् ।
अवाचचक्षम्पदमद्योग्रन्नि धातुरन्वायम् ॥ १०

प्रत्यक्षे वा परोक्षे वा लुङ्भूतेऽद्यतने भवेत् ।
अभि स्तोमा अनूषत सनिम्मेधामयासिषम् ॥ ११

आपो अद्यान्वचारिषं रसेन समगस्महि ।
उदगादयमादित्य एषायुक्तपरावतः ॥ १२

वि सुपर्णो अन्तरिक्षाण्ययुक्त सप्त शुन्ध्युवः ।
अच्छा सिन्धुम्मातृतमामद्यतन्य इमा इति ॥ १३

अथापि भूतसामान्ये पश्यामोऽद्यतनीन्त्रियाम् ।
सं वो मदासो अग्मत वधीर्हि दस्युन्धनिनम् ॥ १४

अकारि रत्नधातमः सूक्तादौ लङ्प्रदृश्यते ।
मनसा निर्मितः स्तोमस्तस्य वक्तुमुपक्रमः ॥ १५

ननु भूतलकारेषु सङ्कीर्णेषु ततस्ततः ।
परोक्षादिविभागेऽस्मिन्निर्बन्धः केन पाणिनेः ॥ १६

विहितेषु लकारेषु भूतमात्रे ततो वयम् ।
तत्तद्वाक्यानुसारेण वक्ष्यामोऽर्थांस्तथा तथा ॥ १७

नैवं युक्तं रूपभेदादर्थभेदश्च युज्यते ।
पश्यामोऽपि च वाक्येषु भेदम्पाणिनिदर्शितम् ॥ १८

स्पष्टमेव लकारार्थान्पश्यामो ब्राह्मणेषु च ।
हरिश्चन्द्रो ह वैधसः शौनःशेपस्निरीक्ष्यताम् ॥ १९

तस्माद्यथा तथा भूते परोक्षाद्यतनादिकम् ।
प्रदर्शयेत्प्रयत्नेन मन्त्रेष्वपि च पण्डितः ॥ २०

स्पष्टः संवादसूक्तेषु परोक्षाद्यतनादिकम् ।
तथान्येषु च सूक्तेषु न तम्भेदम्परित्यजेत् ॥ २१

न पश्यति यदा मन्त्रे तं विशेषम्प्रयत्नतः ।
अपि वैकाङ्क्षविकल्पम्भवन्ति छान्दसास्तदा ॥ २२

इति

---

( iv )

## अध्यायन्तन्नु वोचाम व्याचिख्यासति माधवः। प्रदर्शयँल्लिङो वृत्तिम्बहुष्वर्थेषु लिङ्स्मृतः ॥

---

कर्तव्यताप्रतीतिस्तु सर्वेष्वर्थेषुविद्यते ।
विध्यादयः काकुभेदात्षड्भवन्तीति पण्डिताः ॥ १

न दुरुक्ताय स्पृहयेद्वृणीयादिति चापरम् ।
विधावुदाहरन्त्येतौ प्रेषणं विधिरुच्यते ॥ २

निमन्त्रणामन्त्रणयोर्भेदमाह पतञ्जलिः ।
एवन्तर्हि नियोगतः कर्तव्यन्तन्निमन्त्रणम् ॥ ३

आमन्त्रणे कामचारस्तत्र नाकुर्वतो भवम् ।
अधीष्टन्नाम सत्कारपूर्वं व्यापारणं विदुः ॥ ४

दृश्यन्ते बहवोऽस्माभिः प्रार्थनाविषया लिङः ।
तयोरिदवसा वयं सं युज्याव सनिभ्य आ ॥ ५

विद्युर्मे अस्य देवा इन्द्रो विद्यात्सहर्षिभिः ।
अवैनं राजा वरुणोऽन्तर्निहिताः केतवः स्युः ॥ ६

विधीयते चाशिषि लिङ्ङाशीर्धर्मः प्रयोक्तरि ।
मयोभुवा सुप्रणीती भूयाम वाजदान्नाम् ॥ ७

हेतुहेतुमतोर्लिङ्स्याद्यदिन्द्राहं यथेति सः ।
अधीष्टस्योदाहरणमुतो न उत्पुपूर्याः ॥ ८

अद्या मुरीय लिङयं विध्यादिषु न कश्चन ।
अप्यू नु पत्नीरिति च दृश्यतेऽन्यविधस्तथा ॥ ९

एवम्प्रकारा बहवो लिङ्गोऽस्माभिः प्रदर्शिताः ।
सन्ति चान्येऽपि बहवः पश्येत्तांश्चापि पण्डितः ॥ १०

इति

---

## (v)

### ता वामद्य तावपरं व्याचिख्यासति माधवः ।
### लोटः प्रदर्शयन्वृत्तिं लेटश्च तदनन्तरम् ॥

लोङ्लेटावपि विध्यादौ स्मृतौ यत्र लिङो विधिः ।
ऋजीते परिवृन्धि नो विधिराशीश्च याचनम् ॥ १

नाहमतो निरयेति लोटः सर्वे विधायकाः ।
वचनव्यक्तिभेदस्तु वाक्यसंयोगतः कृतः ॥ २

समुच्चयेऽन्यतरस्यामस्योदाहरणं विदुः ।
प्रेह्यभीहि धृष्णुहीति शत्रुष्विन्त्थङ्करोति सः ॥ ३

दृश्यन्ते बहवो लेटः प्रार्थनाविषया इह ।
स देवाँ एह वक्षति यक्षच्च पिप्रयच्च नः ॥ ४

त्रिमूर्धानं सप्तरश्मिमयं लेट्स्याद्विधायकः ।
अथापि वर्तमानेऽर्थे यो यजाति यजात इत् ॥ ५

अग्निना रयिमश्नवद्बहवः सन्ति तादृशाः ।
आ घा गमद्यदिश्रवद्धेतुहेतुमतोरिमौ ॥ ६

वाक्यार्थानुगुणं लोटो लेटश्चार्थम्प्रदर्शयेत् ।
व्युत्पत्त्यर्थमिमाः काश्चिदृचोऽस्माभिः प्रदर्शिताः ॥ ७

इति ॥

---

(vi)

नि होता होतृषदने व्याचिख्यासति माधवः।
लृटः प्रदर्शयन्वृत्तिं लुटश्च तदनन्तरम् ॥

स्तविष्यामि त्वमहन्न जातो न जनिष्यते।
यन्मानुषान्यक्ष्यमाणानग्ने भद्रङ्करिष्यसि ॥ १

यानि करिष्या कृणुहि प्रहिन्वानोऽग्रेगो राजा।
वृत्रमिन्द्रो हनिष्यन्वक्ष्यन्तीवेदा गनीगन्ति ॥ २

दृष्टो लृटः प्रयोगोऽल्पो लुटस्त्वल्पतरः स्मृतः।
दृश्यन्ते ब्राह्मणे तच्च कस्य चाश्वो भवितेति ॥ ३

श्वो यज्ञे प्रयोक्तासे च श्वो विषुवान्भवितेति।
शाट्यायनकन्तदेवागत्य श्वो वक्ताराविति ॥ ४

लृटो लोटश्च विषये दृश्यन्ते च लिङादयः।
वयमद्येन्द्रस्य प्रेष्ठाः प्रातर्मक्षू धियावसुः ॥ ५

हता इन्द्रेण पणयः शयध्वे लेड्भविष्यति।
अपि वा लड्वर्तमानसामीप्येऽयम्भवेदिति ॥ ६

हेतुहेतुमद्भावे च प्रयुज्यन्ते लटः क्वचित्।
एकश्चमसश्चतुरस्तत्र स्याल्लृण्निदर्शनम् ॥ ७

स्मर्यते लिङ्निमित्ते लृङ्क्रिया यत्रातिपद्यते।
यो वृत्राय सिनमत्र भूतमात्रे तु दृश्यते ॥ ८

क्रियातिपत्तिर्बहुशो ब्राह्मणेषु प्रदृश्यते।
इत्यध्यायादिष्विमे सर्वे लकाराः सम्प्रदर्शिता ॥ ९

इति

## ( vii )

# सेमामविड्ढि प्रभृतिं व्याचिख्यासति माधवः ।
# तत्राक्रियेषु वाक्येषु कर्तव्यमुपदिश्यते ॥

---

अपेक्षया क्रियाक्षेपः कारकाणामितिस्थितिः ।
यास्ते प्रजा अमृतस्य परस्मिन्परिचरन्ति ॥ १

दस्रा ह यद्रेक्ण इति याचते वामिति क्रिया ।
ता जिह्वया सदमेदं सुमेधा याचते जलम् ॥ २

उपसर्गाः प्रयुज्यन्ते क्रियाक्षेपाय च क्वचित् ।
यत्ते सखिभ्य आ वरमा प्रयच्छेदिति क्रिया ॥ ३

इमे सोमास इन्दवः सुता अध्यासते क्रिया ।
अर्चन्ननु स्वराज्यमित्यत्रान्वास्ते क्रियापदम् ॥ ४

पश्येद्यदादियोगेऽपि निहतं यदि तिङ्पदम् ।
मध्ये क्रियापदाक्षेपस्तत्तद्वाक्यानुसारतः ॥ ५

महाँ इन्द्रो य ओजसा प्रयद्दिवो हरिवश्च ।
न यो वराय मरुतामृचस्तत्र निदर्शनम् ॥ ६

अश्वन्न त्वा वारवन्तम्मनोजवेभिरिर्षिरैः ।
ऋता यद्गर्भमदितिराक्षिपन्ति क्रिया इमाः ॥ ७

यदोपमेयेनान्वेति क्रियाशब्दस्तदापि च ।
उपमेयान्वये योग्यामन्यामध्याहरेत्क्रियाम् ॥ ८

नासत्याभ्याम्बर्हिरिव सनाद्राजभ्यो जुहोमि ।
अग्नाविव समिधान ऋचस्तत्र निदर्शनम् ॥ ९

यच्चिद्धि ते विशो यथा स नो वृष्टिन्दिवस्परि ।
अपेक्षेत क्रियामेत इत्याक्षेपः प्रपञ्चितः १०

इति

---

## ( viii )

**मन्दस्व होत्रादध्यायं व्याचिख्यासति माधवः ।**
**दर्शयन्नात्मनेपदप्रयुक्तम्भेदमात्मनः ॥**

किमत्र कारणम्ब्रूहि धातवोऽमी व्यवस्थिताः ।
परस्मैपदिनः केचिदात्मनेपदिनोऽपरे ॥ १

आत्मनेपदमेवैषु दृश्यते भावकर्मणोः ।
उदाहरणमेतेषाम्बहुत्वान्न प्रदर्श्यते ॥ २

वदन्ति तत्र कवयः स्वभावादिह केचन ।
अभिसंयन्ति कर्तारमग्निमीळे पुरोहितम् ॥ ३

फलं स्तुतेः स्वभावेन कर्तारमुपगच्छति ।
अन्यार्थत्वं स्तुतेर्यस्मात्प्रतिपाद्यमिति स्थितिः ॥ ४

आत्मनेपदिनस्ते स्युः परस्मैपदिनोऽपरे ।
ईक्षतेः पश्यतेश्चापि भेदः सूक्ष्मोऽस्ति कश्चन ॥ ५

अभिसन्धाय कार्यार्थन्दर्शनं विदुरीक्षणम् ।
अवेक्षे सुप्रजास्त्वाय तत्राहुश्च निदर्शनम् ॥ ६

नियमः पश्यतेर्नास्ति नराशंसं सुधृष्टमम् ।
परस्मैपदी पश्यतिरन्यस्तेनात्मनेपदी ॥ ७

भवन्ति चोभयविधाः भ्राता रत्नं प्रातरित्वा ।
अञ्जन्तित्वामध्वरे च चित्रैरञ्जिभिर्वपुषे ॥ ८

कर्तृगामिन्यपि फले न भवत्यात्मनेपदम् ।
अविवक्षयोपपदात्प्रतीतेश्च तथा क्वचित् ॥ ९

आत्मनेपदमित्येषा संज्ञार्थन्दर्शयत्यमुम् ।
पदिः प्रयोगकर्मा स्यादात्मने भाष्यते इति ॥ १०

अल्पम्भेदमनाश्रित्य परोक्षादौ लुङादयः ।
प्रयुज्यन्ते यथा तद्वत्सङ्करश्चापि दृश्यते ॥ ११

वदन्ति वैयाकरणा इमम्भेदमुपग्रहम् ।
स चायन्दुर्ग्रहो भेदः स्पष्टन्तेभ्योऽवधार्यताम् ॥ १२

इति

---

# ऋग्वेदानुक्रमणी

iii

## निपातानुक्रमणी

(i)

तृतीयोऽथाष्टकस्तस्मिन्नध्यायादिषु वक्ष्यते ।
यद्वक्तव्यन्निपातेषु ब्राह्मणैश्छान्दसैरिह ॥

इयन्त इति सङ्ख्यानन्निपातनान्न शक्यते ।
उपसर्गास्तु विज्ञेया क्रियायोगेषु विंशतिः ॥ १

निपाताः खलु कामं वै पृथङ्नाच्छा सचा पुनः ।
शश्वन्नक्तन्दिवा माकिर्यथेदिति सदम्मुहुः ॥ २

आदथाध मिथू शीभं वृथा सज्ञोगृथग्वषट् ।
. . . . . . . . . किल हन्त नहिर्न्वहः ॥ ३

अथो यदि नमस्तेऽमी चत्वारिंशदुदाहृताः ।
आद्युदात्ताश्च सर्वेऽमी सन्त्यन्येऽपि च तादृशाः ॥ ४

नामेदाश्वो वषट्स्वाहा नाना जोषं स्मदन्तिकम् ।
शनैः सामि हि मा वस्ति . . . . . . . . . ॥ ५

भूयस्तूयम्मृषा ह्यः श्वन्कीं वस्तोः षड्विंशतिः ।
अन्तोदात्ता निपातेषु ननु नूनं स्वयम्पुरा ॥ ६

उतापिरेव मक्ष्विस्तथा पश्चादेवममा तिरः ।
प्रातरुच्चाङ्ग सुष्ठुद्धा कुविस्सद्य इह मिथः ॥ ७

साकमारात्सहतिरमन्तराशु सनादृते ।
अन्तरा सनुतः स्वस्ति चनारेऽग्यानुषक्पुनः ॥ ८

दोषा सायश्चत्वारिंशत्सन्ति चान्येऽपि तादृशाः ।
हिङ्सता हुरुकूपराचैः शनकैर्मिथुया तथा ॥ ९

सस्वरोषं सना तेऽमी दश सन्ति तथापरे ।
स्वः क्वेति स्वरितौ विद्याद्द्रष्टव्याश्च तथापरे ॥ १०

सीम्नुदुःस्वित्स्मवाहेवा द्वादैशेते चिदीङ्चैः ।
अमी च सर्वानुदात्ता द्रष्टव्याश्च तथापरे ॥ ११

ऋचान्निरीक्षणादेते निपाताः शतमुद्धृताः ।
त्रिंशच्च सूक्ष्मेक्षिकया समुद्धार्यास्तथापरे ॥ १२

वाक्यार्थेष्वप्रवृत्तेषु निपाताश्चेदनन्विताः ।
ऋक्पादपूरणास्ते स्युरिति यास्कस्य दर्शनम् ॥ १३

नवैकिलनुनामाथखल्विदादधसीमुकम् ।
उतनूनमिवेङ्गस्मचिद्धचाः स्युरनर्थकाः ॥ १४

अन्येषान्तु निपातानाम्पूरणत्वन्न दृश्यते ।
नादयः पूरणाश्चस्युर्यदा वाक्येष्वनन्विताः ॥ १५



5 A

अप्रवृत्ते तु वाक्यार्थे ब्राह्मणेष्वपि नन्वमी ।
दृश्यन्ते यत्र नापेक्षा विद्यते पादपूरणैः ॥ १६

माधवस्तत्र वदति स्फुटत्वोद्ग्रहणादिकम् ।
वाक्यार्थे जनयन्त्येते मन्त्रब्राह्मणयोरिति ॥ ब्र १७

स्फुटत्वोद्ग्रहणादिश्च क्वचित्सूक्ष्मः क्वचित्स्फुटः ।
यत्र स्फुटास्तदा सार्थाः सूक्ष्मे स्युः पूरणा इति ॥ १८

मधु ह स्म वा ऋषिभ्यस्त्रिभिः स्फुटतरो भवेत् ।
तथैवोत वा घा स्यात्ताद्भवः सन्ति तादृशाः ॥ १९

उकारो विनिग्रहार्थस्तथानेकत्र दर्शनात् ।
तमु ष्टवाम यङ्गिरस्तमु त्वा गोतमो गिरा ॥ २०

अयमु ते समतसि न विनिग्रहसम्भवः ः
उदु ष्य देवः सविता पूरणास्तादृशेषु सः ॥ २१

एवकारेण सदृश उकारोऽन्यत्र दृश्यते ।
मन्त्रेष्वेषु तु तस्यार्थः स्फुटत्वोद्ग्रहणादिकः ॥ २२

एतावता पूरणत्वन्नानर्थक्यादिति स्थितिः ।
आदानन्तर्यवचनो यथादह स्वधामनु ॥ २३

आत्सूर्यञ्जनयन्द्यामुषासमादित्ते हर्यता ।
आदिद्धोतारं वृणते पूरणश्चापि विद्यते ॥ २४

इदेवकारसदृशः स इद्भोजो यो गृहवे ।
स इद्देवेषु गच्छति गृह्यते वापि पूरणः ॥ २५

ईमिदंशब्दसदृश एमाशुमाशवे भर ।
स ईम्पाहि य ऋजिषी विद्यते चापि पूरणः ॥ २६

उच्चावचेषु निपततामर्थेष्वेषु यथायथम् ।
ज्ञानोपादानवान्विप्रो न मन्त्रार्थेषु मुह्यति ॥

इति

---

( ii )

## अथेच्छन्ति त्वा सोम्यासो व्याचख्यासति माधवः। सङ्गतेषु निपातेषु वक्तव्यं सम्प्रदर्शयन्॥

पृथगर्थान्निपातेषु सङ्गतेषु प्रदर्शयेत् ।
आदह स्वधामन्विति तत्राहुश्च निदर्शनम् ॥ १

स्विदित्येको निपातोऽयमधस्विदासीदुपरि ।
चनचेन्नन्वमी च स्युरभिन्ना इति निश्चयः ॥ २

समुदाया निपातानान्नामी नो मो अथो इति ।
अतस्तेषाम्प्रगृह्यत्वम्पृथक्शास्ति हि पाणिनिः ॥ ३

मो अहन्द्विषते रधन्नो वयम्मराम इति ।
समुदायत्वमनयोरित्थमर्थप्रतीतितः ॥ ४

इच्छन्ति कवयः केचिद्द्वयोरेकः स्वरस्तथा ।
नहीत्येको निपातोऽयम्पृथगध्वर्यवस्तु तम् ॥ ५

अधीयतेऽप्युदात्तश्च नह्यस्या अपरश्चन ।
नहीत्यनेन योगे च स्मर्तव्यास्तिङुदात्तवान् ॥ ६

केवलेन हिना योगे शाब्दिकैः स्मर्यते यथा ।
बह्वृचा हिकमित्येकङ्किमिति द्वावधीयते ॥ ७

अयञ्च युज्यते ह्येक एकोदात्तस्य दर्शनात् ।
राजा हि कम्भुवनानान्तिष्ठा सु कम्मघवन्मा ॥ ८

येना नु कम्मानुषी च त्वयोऽमी निहताः कमः ।
सूक्ष्मेक्षिकापरा विप्राः कथयन्त्यत्र बह्वृचाः ॥ ९

यथा समासे पदयोरैकार्थ्यमुपजायते ।
नञो हेश्च तथैकार्थ्यन्नहीत्यत्नोपजायते ॥ १०

ह्यर्थस्य च प्रधानत्वादन्तोदात्तमभूत्पदम् ।
हिना योगे नुसुभ्याश्च कमित्येतन्निहन्यते ॥ ११

पदेनानेन संयोगाद्यथाख्यातन्निहन्यते ।
हिनुयोगे कमित्येतदेवमेवेति बह्वृचाः ॥ १२

अध्वर्यवस्तु नेच्छन्ति आशिषे वै कं यजमानः ।
इत्युदात्तमधीयानाः पृथक्चार्थङ्कमो विदुः ॥ १३

इति

---

(iii)

## इन्द्र त्वा वृषभं वयं व्याचिख्यासति माधवः ।
## निपातेष्वेव केषाञ्चिद्वृत्तिभेदम्प्रदर्शयन् ॥

निपाता ये विकल्पार्था ये समुच्चयवाचिनः ।
ये वा विनिग्रहार्थीया उपमार्थाश्च ये तथा ॥ १

सर्वे ते न प्रयुज्यन्त ऋक्पादादिष्विति स्थितिः ।
इव देवदत्त इति न हि लोके प्रयुज्यते ॥ २

वा देवदत्त इति वा तथा वेदे च दृश्यताम् ।
नन्वेवकारसदृश उकारो दर्शनात्तथा ॥ ३

स दृश्यते च पादादावुलोकमग्ने कृणवः ।
उ लोककृत्नुमीमहे उ लोककृत्नुमद्रिवः ॥ ४

उ लोको यस्ते अद्रिवस्ते चत्वार उदाहृताः ।
नामी विनिग्रहार्थीया न ह्येष्वस्ति विनिग्रहः ॥ ५

पूरणत्वञ्च नैतेषान्नह्यादौ सन्ति पूरणाः ।
उ लोक उत्तमो लोक इति वक्तुन्न युज्यते ॥ ६

शाकल्यो ह्यवगृह्णीयात्तदा नोमिति दर्शयेत् ।
अथाप्युत्तमपर्यायं लोकात्प्राक्पर्युपस्थितम् ॥ ७

मन्यामहे कान्दिशीकास्तत्र वृद्धेषु निर्णयः ।
उपमार्थश्च नन्वादौ यथाशब्दः प्रयुज्यते ॥ ८

तथा तदस्तु सोमपा यथा त उश्मसीष्टये ।
प्रकारवचनः सोऽयं लौकिकाश्च प्रयुञ्जते ॥ ९

येन प्रकारेण कृतन्तेनास्माकङ्करोत्विति ।
इव देवदत्तेन कृतन्न तु दृष्टन्तथा क्वचित् ॥ १०

तस्माद्यथेवौ भिन्नार्थाविति सूक्ष्मेक्षिकापराः ।
प्रयुज्यते यथाशब्दे क्रियापदमपेक्षितम् ॥ ११

उश्मसीत्यादिकन्नैवामिवयोगे प्रयुज्यते ।
बहुष्वर्थेषु दृष्टो नञ्निषेधेऽथ समुच्चये ॥ १२

सम्प्रत्यर्थ इवार्थे च पूरणेऽपि च दृश्यते ।
प्रयुज्यते न वाक्यादावुपमार्थ इति स्थितिः ॥ १३

उपमायान्निषेधे च दृश्यन्ते बहवो नञः ।
तथा समुच्चयार्थीया अग्निमुषान्न जरते ॥ १४

तस्मिन्साकन्त्रिशता न होता मनुष्यो न दक्षः ।
अश्वे न चित्रे अरुषि सम्प्रत्यर्थन्नवं विदुः ॥ १५

अस्मै भीमाय च तथा सन्ति चान्येऽपि तादृशाः ।
विपाङ्ज्योतींषि विभ्रन्ते नकारस्तत्र पूरणः ॥ १६

पादादौ न प्रयुज्यन्ते हिस्मचेत्स्विद्धवैतवः ।
कारणन्तत्र वाक्यादावर्थस्यैषामनन्वयः ॥ १७

पादादावपि सद्भावः पूरणानामपीच्छति ।
यास्को यदाह नूनं सा नूनमित्येष पूरणः ॥ १८

यथा न नूनमस्तीति सम्प्रतित्वस्य वाचकः ।
तथैव सम्प्रत्यर्थत्वमत्रापीच्छन्ति केचन ॥ १९

नूशब्दः क्षिप्रवचनो वाक्यादावपि दृश्यते ।
नू मर्त्तो दयत इति मध्ये प्रशस्यवाचकः ॥ २०

---

निपातानाम्प्रयोगज्ञा न मुह्यन्ति कदाचन ।
अतो लोकानुसारेण निपातार्थम्प्रदर्शयेत् ॥

इति

---

(iv)

## न ता मिनन्ति मायिनो न्याचिख्यासति माधवः । चाहाङ्गानान्निपातानामर्थमादौ प्रदर्शयन् ॥

चकारः समुच्चयार्थश्चेदर्थे चापि वर्तते ।
काकुः समुच्चये कश्चित्तंश्चेदर्थं विदुर्बुधाः ॥ १

यद्योगे तिङुदात्तः स्यात्स चेदर्थः प्रकीर्तितः ।
समुच्चयार्थन्तं विद्याद्यद्योगे तिङ्निहन्यते ॥ २

आ च त्वामेता वृषणा त्वश्च सोम नो वचः । वशः इति पाठः ।
इन्द्रश्च मृळयाति नश्चेदर्थाश्चा इमे स्मृताः ॥ ३

एवकारेण सदृशौ विहौ यास्केन भाषितौ ।
यद्ध यान्ति मरुतो हकारः खलुना समः ॥ ४

कद्ध नूनङ्कथप्रियः को ह कस्मिन्नसि श्रितः ।
कथा ह तद्वरुणाय नैतेष्वस्ति विनिग्रहः ॥ नियमो नियोगो धारणम् इत्यनर्थान्तरम् ।

तव ह त्यदिन्द्र विश्वं वर्तते हो विनिग्रहे ।
स्फुटत्वोद्ग्रहणार्थीया हअहा बहवः श्रुताः ॥ ६

अनाह तत्कण्व एषामनाह दानुमातरः ।
अनाह तदुरुगायस्य दिप्सन्त इद्रिपवो नाह ॥ ७

अहा विनिग्रहार्थीयाश्चत्वारः समुदाहृताः ।
दृश्यन्ते बहवोऽन्ये च सर्वेषु निहतास्तिङः ॥ ८

पूजायाङ्गम्यमानायामाख्यातन्न निहन्यते ।
आदह स्वधामन्विति तत्रोदाहरणं स्मृतम् ॥ ९



6 A

अनन्तरमेव वृष्टेर्गर्भत्वम्प्राप्नुवन्त्यमी ।
न चासते क्षणन्तूष्णीमिति पूजा प्रतीयते ॥ १०

अङ्गेति क्षिप्रवचनः सम्बोधयति चापरम् ।
सो अङ्ग वेद यदि वा न त्वमङ्ग प्र शंसिषः ॥ ११

एतौ सम्बोधनार्थीयौ इन्द्रो अङ्ग महद्भयम् ।
अत्राहुः क्षिप्रवचनं यदा सम्बोधनम्भवेत् ॥ १२

तदानीम्प्रातिलोम्यश्चेदाख्यातन्न निहन्यते ।
प्रातिलोम्योदाहरणन्न दृष्टमधुना मया ॥ १३

वैयाकरणैरपि नादर्शि । लौकिकं तु यत्र तत्रोदाहृ

इति

---

( v )

# वैश्वानराय मीढ्हुषे व्याचिख्यासति माधवः ।
# आदौ प्रदर्शयन्वृत्तिन्तिङ्गं ये हिभिरन्विताः ॥

वाक्यार्थस्य परार्थत्वे हिशब्दोऽयम्प्रयुज्यते ।
उद्गृह्णाति च वाक्यार्थमिन्दवो वामुशन्ति हि ॥ १

उद्गृह्यमाणो वाक्यार्थो न स्वस्मिन्पर्यवस्यति ।
कामयन्ते हि वां सोमास्तस्मादागच्छतं युवाम् ॥ २

सुते हि त्वा हवामहे स हि नः प्रमतिर्मही ।
न हि त्वा रोदसी उभे तिङर्थोऽत्र हिना स्फुटः ॥ ३

वाक्यान्तरेणान्वयार्थमप्ययं हिः प्रयुज्यते ।
असत्यपि च हेतुत्वे तथैवोद्ग्रहणेऽसति ॥ ४

युक्ष्वा हि देवहूतमानुषोवाजं हि वंस्व
नहि ते क्षत्रन्न सह उरुं हि राजा वरुणः ॥ ५

अश्वान्रथे योजयित्वा तेनागत्य निषीद च ।
चित्रमन्नम्प्रयच्छोषस्तेन यज्ञमुवाह च ॥ ६

क्षत्रादीनि वयो नापुर्न चापो वेगवत्तमाः ।
विस्तीर्णमार्गकरणात्पादाकः प्रतिधातवे ॥ ७

आश्चर्ये हिः प्रसिद्ध्याश्च तथौचित्ये च दृश्यते ।
अस्ति चोद्ग्रहणन्तेषां सर्वेष्विति विनिश्चयः ॥ ८

परा हि मे विमन्यव आ हि ष्मा सूनवे पिता ।
न हि वामस्ति दूरक आश्चर्यार्थ इमे हयः ॥ ९

स हि श्रवस्युस्त्वं ह्यग्ने प्रसिद्ध्यां ही श्रुताविमौ ।
तथा त्वं ह्यग्ने सदमिद्धहवः सन्ति तादृशाः ॥ १०

एवाँ ह्यस्य सूनृतेति तृचे दृष्टा ह्यस्त्रयः ।
औचित्यार्था भवन्त्येते सन्त्यन्येऽपि च तादृशाः ॥ ११

समुच्चये च हिर्दृष्टः स मन्दस्वा ह्यन्धसः ।
तत्परश्चानुदात्तस्तिङ्सन्त्यन्येऽपि च तादृशाः ॥ १२

हेरर्थं यो विजानाति न स मन्त्रेषु मुह्यति ।
तेन प्रदर्शितोऽस्माभिर्हेरर्थश्च प्रपञ्चतः ॥

इति

---

(vi)

# अथैवा त्वामिन्द्र वज्रिन्व्याचिख्यासति माधवः । निपातेष्वेव वक्तव्यम्प्रागनुक्तम्प्रदर्शयन् ॥

अथाधेति समानार्थौ तौ पठन्ति च बह्वृचाः ।
अवधानेन महता तौ यथा स्तः पृथक्पृथक् ॥ १

न गुरुत्वं लघुत्वं वा वर्णैर्मात्राभिरेव च ।
भवतः छन्दसाङ्किन्तु प्रयत्नैश्च पृथग्विधैः ॥ २

यथा सर्षपमेयेषु करोति गुरुलाघवम् ।
त्रसरेणुस्तथा वेदे प्रयत्नो वर्णगोचरः ॥ ३

एवं ह्यौ च पर्यायौ प्रसिद्धेः प्रतिपादकौ ।
पृथक्पृथक्प्रयुज्येते बह्वृचैरवधानतः ॥ ४

परा ह यत्स्थिरं हथ यद्ध स्या ते पत्नीयसी ।
आ घा गमद्यदि श्रवदा घा ये अग्निमिन्धते ॥ ५

इयत्तिका शकुन्तिका सूर्ये विषमा सजामि ।
अनयोरुत्तरेऽर्धर्चे द्वैविध्यन्दृश्यते पदे ॥ ६

अधीयते हि द्विविधं सो इत्यपि स इत्यपि ।
न तत्र वासनामेके वक्तव्याम्मन्वते जनाः ॥ ७

यथानु श्रुताममतिमक्रविहस्ता सुकृते ।
वरुणेळास्वन्तारिति पदद्वैविध्यदर्शनम् ॥ ८

न तत्र दोषः पूर्वस्याम्पृथङ्मितश्च कीर्त्यते ।
वरुणेति द्वितीयस्यामेकेनोक्तावुभावपि ॥ ९

तस्मादत्रापि वक्तव्यन्द्वैविध्यस्य प्रयोजनम् ।
तदुच्यते सा नो अमा सो चिन्नु भद्रा क्षुमती ॥ १०

सो चिन्नु वृष्टिर्यूथ्या च त्रिषूकारः प्रदृश्यते ।
स्पष्टीकरोति स स्त्रीत्वमुरित्याहुर्विपश्चितः ॥ ११

ननु नाम्नामनेकस्मिन्वृत्तिरर्थेऽपि युज्यते ।
तानिह्याख्यातजान्याहुर्यथा गौर्गमनादिति ॥ १२

गमनात्पृथिवी गौः स्यादादित्यः पशुरेव च ।
वाग्वा सा गच्छति जलन्निम्नम्प्रत्येति सर्वदा ॥ १३

निपाता उपसर्गाश्च दृश्यन्ते केन हेतुना ।
बहुष्वर्थेषु येष्वेते दृश्यन्त उपमादिषु ॥ १४

बहुष्वर्थेषु धातूनां वृत्तौ यत्कारणम्भवेत् ।
तदेवात्रापि भवति सा च शक्तिरिति स्थितिः ॥ १५

इति

———

( vii )

प्र ऋभुभ्यो दूतमिव व्याचिख्यासति माधवः।
उपसर्गेषु वक्तव्यमादितः सम्प्रदर्शयन्॥

अन्वयव्यतिरेकाभ्याम्प्रकृतेः प्रत्ययस्य च।
पृथगर्थपरिज्ञानमिति शाब्दिकनिर्णयः॥ १

उपसर्गेष्वपि तथा भवेदिति विनिश्चयः।
तदेतद्धातुसंज्ञायां स्पष्टमाह पतञ्जलिः॥ २

वदन्ति वाचकानेक उपसर्गान्विपश्चितः।
अर्थानान्तु निलीनानान्द्योतकास्तु पतञ्जलेः॥ ३

प्रतिष्ठते तिष्ठतीति गमनं स्थानमेव च।
उभयन्तिष्ठतेरर्थः प्रस्तत्र द्योतको गतेः॥ ४

बीजानि वपतीत्यत्र निवापे दृश्यते वपिः।
अधि पेशांसि वपते छेदने तत्र वर्तते॥ ५

एवमन्येऽपि दृश्यन्ते बहुष्वर्थेषु धातवः।
द्योत्यन्त उपसर्गैश्च धात्वर्था इति निर्णयः॥ ६

प्र यात शीभमाशुभिः प्र वो भ्रियन्त इन्दवः।
प्रारम्भे प्रोऽनयोर्दृष्टः प्रकर्षे चापि दृश्यते॥ ७

अर्चत प्रार्चतेत्यत्र वैस्पष्ट्ये चापि दृश्यते।
अस्येदु प्र ब्रूहि पूर्व्या बह्वः सन्ति तादृशाः॥ ८

प्रभुः प्रार्थयते कन्याम्प्रशान्तः प्राञ्जलिस्तथा।
प्रसन्नमुदकञ्चेति भिन्नार्थाः प्रा इमे मताः॥ ९

भवतो द्वौ यणादेशौ यदैकस्मिन्पदे तदा ।
तथा व्यूहेद्यणादेशं यथा वृत्तिर्न दुष्यति ॥ १०

व्यूहे च वृत्त्यसिद्धिश्चेद्व्यूहन्नेच्छन्ति केचन ।
व्यूहेनाक्षरसङ्ख्या च कार्यैवेत्याह माधवः ॥ ११

## तदिमौ श्लोकौ भवतः ।

चत्वारि सन्धिजातानि यैश्छन्दो ह्रसते न च ।
प्रश्लिष्टमभिनिहतं क्षिप्रसन्धिरभिद्रुतम् ॥

एतानि सन्धिजातानि मिमानश्छन्दसोऽक्षरैः ।
द्वेधङ्कुर्यादसम्पूर्णे न पूर्णे किञ्चनेङ्गयेत् ॥ इति ॥

गुणो वृद्धिश्च दीर्घश्च प्रश्लिष्टाः सन्धयः स्मृताः ।
एङः पदान्तादतीति सन्तोऽभिनिहितं विदुः ॥ १२

प्रयोगोऽर्थो वृत्तिरेते पदज्ञानस्य हेतवः ।
बलीयः स्याद्विरोधे च पूर्वम्पूर्वमिति स्थितिः ॥ १३

इति

---

(viii)

# सोमः पुनानो अर्षति व्याचिख्यासति माधवः । अवसानेषु वक्तव्यमादितः सम्प्रदर्शयन् ॥

तत्रर्चामवसानानि प्रायेणार्थानुरूपतः ।
अवस्येदन्ततस्तत्र द्विपदैकपदा ऋचः ॥ १

अर्धर्चेऽवान्तरः कश्चिद्वाक्यार्थः पर्यवस्यति ।
बह्वीष्वृक्षु विशेषन्तत्र विजानन्त्यपण्डिताः ॥ २

पदयोर्मुख्ययोः पङ्क्त्यामेकोऽर्थः पर्यवस्थितः ।
त्रिषु चान्यस्ततस्तासु द्वावुक्त्वा त्रीनथो वदेत् ॥ ३

यत्रान्यथावसानं स्यात्तत्रार्थोऽपि च तादृशः ।
पुर उष्णिक्षु सर्वासु पादो मुख्यस्तथाविधः ॥ ४

भरद्वाजायाव धुक्षत द्विता द्दतेरिव तेऽन्वक्रमस्तु सख्यम् ।
तच्चक्षुर्देवहितं शुक्रमुच्चरद्धृक्षाश्विन्मे अभिपित्वे अरारणुः ॥ ५

मध्येऽवसानन्तु चतुष्पदासु
त्रिभिः समस्तैरपरैः परैर्वा ।
एतं शंसन्त्रिभिराद्यैः पदैः स्या-
दधीन्न्वत्र त्रिभिरेवापरैश्च ॥ ६

इन्द्रो मदाय वावृधे नकिष्टङ्कर्मणा नशत् ।
अवस्येत्पादयोरत्र मुख्ययोः क्वचिदन्यथा ॥ ७

नकिर्देवा मिनीमसि त्रिषु पादेष्ववस्यति ।
षट्पदायाश्च मध्ये स्याद्द्वयोर्वा पर्यवस्यति ॥ ८



7

नमोऽभिरय यज्ञोऽभिरीमहे हविर्भिरित्यर्चसोवः।





विनश्यन्ति च धात्वर्था उपसर्गसमन्वयात् ।
प्र अव ते हेळो वरुण/सुन्वानो हि ष्मा यजति ॥ १०

अवपूर्वो विनाशार्थावीयजो अनयोर्ऋचोः ।
रात्र्याश्विदन्धो अतीति विनाशार्थस्तथा दृशिः ॥ ११

व्यज्यन्ते तिरतेरर्था उपसर्गैःपृथग्विधाः ।
मायाभिरिन्द्र मायिनं सोम प्र तिरन्त आयुः ॥ १२

आख्यातशब्दैरस्माभिर्दृश्यते न दुरोऽन्वयः ।
दूढ्यो दुर्धान्दधातीति कृदन्तैर्दृश्यतेऽन्वयः ॥ १३



तृतीयस्याष्टकस्येत्थमध्यायादिषु दर्शिताः ।
उपसर्गनिपातार्थाः सर्वे वेदोपकारिणः ॥

इति

# ऋग्वेदानुक्रमणी

iv

## शब्दावृत्त्यनुक्रमणी

( i )

चतुर्थोऽथाष्टकस्तस्मिन्नध्यायादिषु वक्ष्यते ।
शब्देष्वावर्तमानेषु यद्वाच्यमिह वैदिकैः ॥

समानशब्दा आवृत्ता भवन्ति पादपूरणाः ।
पर्यायेषु तु निर्ब्रूयादिच्छयान्यतमम्बुधः ॥ १

अप्रसिद्धः प्रसिद्धश्च सङ्गच्छेते यदि क्वचित् ।
तत्राप्रसिद्धन्निर्ब्रूयान्न प्रसिद्धमिति स्थितिः ॥ २

जायते त्वष्टुरर्वाशुरश्व इत्यत्र सङ्गताः ।
अर्वन्तमाशुन्निर्ब्रूयान्नत्वश्वं सार्वलौकिकम् ॥ ३

ऋचि विश्वस्य हीत्यस्यां सूनरीत्यादिषु त्रिषु ।
उषसो नामधेयेषु निर्ब्रूयादिच्छया बुधः ॥ ४

नापेक्षन्ते निर्वचनम्भिन्नास्त्वक्षु यथा नरः ।
तथैव पादभेदेऽपि केचिन्नेच्छन्ति निर्वचः ॥ ५

नामाख्यातोपसर्गाणान्निपातानान्तथैव च ।
पारुच्छपीषु दृश्यन्ते बहवः पूरणाः सह ॥ ६

सहसो जातवेदसं विभन्न जातवेदसम् ।
नान्यस्तत्रोभयोरर्थो द्वयोर्ह्यर्थोऽत्र कीर्त्यते ॥ ७

जातप्रज्ञं विप्रमिव जातप्रज्ञमितीदृशी ।
वचनव्यक्तिरत्रास्ति तस्यान्यात्रप्यपेक्षितौ ॥ ८

नैतच्च युज्यते यस्मात्कवितात्र प्रतीयते ।
यदिन्द्राग्नी अवमस्यामित्यृचोः कविता यथा ॥ ९

एवमत्रापि कविता विपर्यासात्प्रतीयते ।
ननु श्रद्धातिरेकोऽत्र पुनरुक्त्या प्रतीयते ॥ १०

आ द्वाभ्यां हरिभ्यामिन्द्र याहीत्यादौ यथा तथा ।
सत्यर्थे कविता तस्मादसतीति विपश्चितः ॥ ११

एवञ्च पूरणः पादो निस्थिराणि चिदोजसा ।
अभ्यासान्ननु चात्रापि भूयानर्थः प्रतीयते ॥ १२

नेति ब्रुवन्त्यप्रतीतेः पादोऽयम्पूरणस्ततः ।
ऋषिप्रयुक्ता चावृत्तिर्नत्वन्यत्र तु दृश्यते ॥ १३

अया रुचा हरिण्येति तृचस्तत्र निदर्शनम् ।
परुच्छेपस्य तनयस्तमद्राक्षीदनानतः ॥ १४

ततः पितृवदभ्यासस्तत्सुतस्यात्र युज्यते ।
परुच्छेपोऽपि ननु च नावर्तयति तद्यथा ॥ १५

उभे पुनामि रोदसी पिशङ्गभृष्टिमम्भृणम् ।
तस्माच्छन्दःस्वभावोऽयमिति वृद्धेभ्य आगमः ॥ १६

ऊर्ध्वञ्जगत्याश्छन्दांसि पूर्यन्ते सदृशैः पदैः ।
तानि द्रष्टुमशक्यानि वृत्तदैर्घ्याद्भवन्त्यतः ॥ १७

तैरेव शब्दैः पूर्यन्ते प्रायेणेति विनिश्चयः ।
वामदेवो मण्डलादावृचस्तिस्रो ददर्श ताः ॥ १८

अष्टिन्तथातिजगतीमर्थभेदात्प्रयुज्यते । प्रयुञ्जते इति पाठः स्यात् ।
न पादपूरणाशङ्का तत्र कोऽयम्परिश्रमः ॥ १९

पारुच्छेपीषु सर्वासु शक्यन्द्वैरूप्यमञ्जसा ।
जातवेदःशब्द इव न प्रदर्शयितुम्बुधैः ॥ २०

यथाकथञ्चिद्द्वैविध्यम्प्रतिपादयितुम्बुधः ।
नेच्छन्ति तेन सर्वेऽमी भवन्ति पादपूरणाः ॥ २१

तमेवार्थम्ब्रुवाणानां वचनव्यक्तयः पृथक् ।
मन्त्रेषु केषुचित्सन्ति केषुचित्तु न सन्ति च ॥ २२

इच्छन्ति काव्यवद्वृद्धा न वेदे बहुभाषणम् ।
तस्माच्छब्दस्य तस्यार्थन्तमेवाहुर्विपश्चितः ॥ २३

पारुच्छेपी ॠचः सर्वा यदा पश्यति पण्डितः ।
न तदा प्रतिपाद्योऽस्य सोऽयमर्थ इति स्थितिः ॥ २४

वेदमुद्रामजानन्तः कुतर्कगतमानसाः ।
आपाततो भाषमाणास्ते हास्या वैदिकैरिह ॥ २५

अभ्यासादाह भूयांसमर्थं यस्ककुलोद्भवः।
अन्यमर्थन्न तु ब्रूते व्याख्यातारो वदन्ति यम्॥ २६

दर्शनीयो दर्शनीयं इत्यभ्यासात्प्रतीयते।
भूयानर्थोऽत्यन्तमिति निर्वाहोऽयश्च केषुचित्॥ २७

इति

---

( ii )

# महि महे तवसोऽथ व्याचिख्यासति माधवः।
# समासविषये वाच्यमादितः सम्प्रदर्शयन् ॥



समास उपसृष्टानान्निवर्तन्ते विभक्तयः ।
विस्पष्टमभिधानाय निर्दिश्यन्ते पुनश्च ताः ॥ १

द्रविणोदा द्रविणसस्ता सोमं सोमपातमा ।
गवाङ्गोपतिरित्येवन्नु ते पादपूरणाः ॥ २

उपादातुमशक्योऽयम्प्रत्ययः प्रकृतिं विना ।
ततोऽन्येन गतार्थापि प्रकृतिः सम्प्रयुज्यते ॥ ३

वसोरिन्द्रं वसुपतिम्पुरूतमम्पुरूणाञ्च ।
रथीतमं रथीनाञ्च पादास्तत्र निदर्शनम् ॥ ४

वाजेभिर्वाजिनीवती वाजेभिरिति पूरणः ।
युक्तान्नैर्बहुभिस्सेयं यज्ञं वष्टु धियावसुः ॥ ५

नन्वत्र विग्रहः सोऽयमस्त्यस्या वाजिनीति यः ।
तृतीयान्तस्य संबन्धः पुल्लिङ्गस्य च तत्र कः ॥ ६

येई- तस्मादन्नैरस्मदीयं हविर्भूतैः सरस्वती ।
वहतामिति मन्त्रार्थो नत्वन्नैरन्नवतीति ॥ ७

किमत्र तव वक्तव्यन्त्वं सोम क्रतुभिरिति ।
किं वेह तव वाच्यं स्याद्यज्ञेभिर्यज्ञवाहसम् ॥ ८

तर्ह्येवं विग्रहः कार्यो वाजिनीभिः समन्विता ।
या सा वाजिनीवतीति तृतीयान्तस्तथान्वितः ॥ ९

ऋतुभिर्युक्तः सुक्रतुर्बहुव्रीहेश्च विग्रहः ।
न त्वस्य सन्ति क्रतवस्तृतीयाश्च तथान्विताः ॥ १०

क्रतवो यस्य सन्तीति योऽयं लौकिकविग्रहः ।
स विस्पष्टाभिधानाय सत्त्वमात्रमपेक्षितम् ॥ ११

अन्वयो वाजशब्देन पुल्लिङ्गेनापि सिद्ध्यति ।
वाजेभिरिति पुल्लिङ्गन्तथा सति न दुष्यति ॥ १२

यद्वान्नवत्वम्बहुभिः क्रतुमन्नैस्तथा सति ।
वृषा वृषत्वेभिरिति समीचीनो भविष्यति ॥ १३

गाभिर्वपावान्मधुना तत्र स्पष्टम्प्रतीयते ।
ऋतोर्गोभिर्वपावत्त्वङ्गोभिरेवान्नवानिति ॥ १४

यज्ञेभिर्यज्ञवाहसं सोमेभिः सोमपातमम् ।
यज्ञैर्यज्ञस्य वोढा यो यज्ञवाहा भवेदिति ॥ १५

अश्विना यज्वरीत्यस्याम्प्रत्ययार्थं विनिर्दिशेत् ।
चनःशब्दमुपादत्ते सन्त्यन्येऽपि च तादृशाः ॥ १६

इति

---

(iii)

## प्रयुञ्जती दिव एति व्याचिख्यासति माधवः।
## द्विरुच्यमानशब्देषु वक्तव्यं सम्प्रदर्शयन् ॥

पदद्विर्वचने वीप्सा नित्यता वा प्रतीयते ।
ततो द्वितीयन्न पदन्तत्र स्यात्पादपूरणम् ।। १

पथस्पथः परिपतिन्धीवतोधीवतः सखा ।
शृण्वे वीर उग्रमुग्रम्पन्यम्पन्यमित्सोतारः ।। २

यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे ।
विशोविशो वो अतिथिं वीप्सा सर्वेषु विद्यते ।। ३

प्रायेण व्यक्तिभेदस्य वीप्सैकस्या अपि क्वचित् ।
अग्निमग्निं हवीमभिरिति तत्र निदर्शनम् ।। ४

देवन्देवं वोऽवसे चेन्द्रमिन्द्रङ्गृणीषणि ।
तन्तमिन्द्राधसे महे पादाश्चात्र निदर्शनम् ।। ५

सुबन्तस्य द्विर्वचने तिङन्तस्यात्र नित्यता ।
एवंविधेऽपि नित्यार्थे द्विरुक्तिरिति केचन ।। ६

वदन्त्यन्ये कालभेदादग्निरेकोऽपि भिद्यते ।
विद्यते तत्र वीप्सेति देशभेदादथापरे ।। ७

सम्प्रोपोदान्द्विर्वचनं स्मर्यते पादपूरणे ।
संसमिद्युवसे वृषन्प्रप्र यज्ञम्पृणीतन ।। ८

उपोप मे परामृश किन्नोदुदु हर्षसे च ।
न पादपूरणा अन्ये परापाभीति ते त्रयः ।। ९



8 A

अपाप शक्रोऽभ्यभि हि मोषुणश्च परापरा ।
वीप्साविशेष एतेषु द्विरुक्तेरवगम्यते ॥ १०

अधोऽधो निर्ऋतिर्मास्मान्सर्वथा दुर्हणा वधीत् ।
एवमभ्यभिहीत्यत्र पुनःपुनरभिक्रमः ॥ ११

योऽलङ्करिष्णुः पुरुषस्ततनुष्टिः स उच्यते ।
मघवा यजमानन्तम्पुनः पुनरपोहति ॥ १२

इन्द्रावरुण नूनुवामिति नुः पूरणो यथा ।
तद्वत्सर्वानिमानाहुरपरे पादपूरणान् ॥ १३

उदाहरणबाहुल्यात्प्रादीनामेव पाणिनिः ।
अनुशास्ति द्विर्वचनमिति केचिदवस्थिताः ॥ १४

इति

—

(iv)

# ऋतस्य गोपावध्यायं व्याचिख्यासति माधवः। पूरणत्वापूरणत्वे वाच्यमेव प्रदर्शयन् ॥

अवान्तरेषु वाक्येषु बहुष्वावर्तते क्रिया ।
अश्याम तङ्काममग्न इत्याद्यत्र निदर्शनम् ॥ १

येनाव तुर्वशं यदुं येन कण्वन्धनस्पृतम् ।
एवंविधेनुषङ्गेण वाक्यार्थस्य प्रदर्शनम् ॥ २

अनुषङ्गाय येनेति पुनरावर्तते पदम् ।
अतो न तादृशेष्वस्ति पूरणत्वमिति स्थितिः ॥ ३

न हि ते क्षत्रन्न सहो न जातो न जनिष्यते ।
एवमन्वह मासाश्च तादृशाश्च न पूरणाः ॥ ४

भवन्तु नः सुत्रात्रासः सुगोपा इति दृश्यते ।
त्राणगोपनयोर्भेदान्न गोपा इति पूरणः ॥ ५

समानो वाञ्जनितेतिं ततश्च भ्रातरा युवम् ।
इत्यर्थो भ्रातरेत्येतच्चतश्चात्र न पूरणम् ॥ ६

सूर्याश्वानामियं संज्ञा या भद्रा अश्वा हरितः ।
हरिन्नामधेया अश्वा अस्येत्यर्थं प्रदर्शयेत् ॥ ७

एवंविधेषु नैकस्य प्राज्ञा इच्छन्ति निर्वचः ।
तूयं श्येनेभिराशुभिर्निर्ब्रूयात्तादृशानिति ॥ ८

पशुन्न नष्टमिवेति दृश्येते नञिवौ सह ।
विशेषणे विशेष्येच पशुमिव नष्टमिव ॥ ९

तत्रैकम्पूरणङ्केचिदिच्छन्त्यन्ये तु मन्वते ।
ऋषिस्वभावाद्दृश्येते विशेषणविशेष्ययोः ॥ १०

अर्चन्तस्त्वा हवामहेऽर्चन्तः समिधीमहि ।
तृतीयोऽर्चन्त इत्येषः केषाञ्चित्पूरणो मतः ॥ ११

पानं समिन्धनञ्चैव कुर्महेऽर्चनपूर्वकम् ।
रक्षणायेति मन्त्रार्थस्तत्रैक अतिरिच्यते ॥ १२

न ते वर्तास्ति राधस इन्द्र देवो न मर्त्यः ।
पादस्य प्रथमस्यात्र प्रपञ्चस्तदनन्तरः ॥ १३

एवम्पादो द्वितीयोऽत्र न पूरण इति स्थितिः ।
देवशब्दस्य पादेन मुख्येनैकेऽन्वयं विदुः ॥ १४

शिक्षेयमस्मै दित्सेयं शचीपते मनीषिणे ।
दद्यामपि च दित्सेयमेवञ्चात्र न पूरणम् ॥ १५

विश्वे गन्त मरुतो विश्वे विश्वे अद्य मरुतः ।
आवर्तते विश्वशब्दस्तञ्चेच्छति न पूरणम् ॥ १६

गमने रक्षणे चैव सर्वेषां ह्यन्वयो मतः ।
व्युत्पत्त्यर्थमृचोऽस्माभिरित्थम्बह्वयः प्रदर्शिताः ॥ १७

इति

---

(v)

# त्वं हि क्षैतवद्यशो व्याचिख्यासति माधवः ।
# पादभेदे पूरणेषु वक्तव्यं सम्प्रदर्शयन् ॥

अवान्तराः केचिदर्था ऋक्पादेषु व्यवस्थिताः ।
समुदायस्तु तेषां यः स वाक्यार्थ इति स्थितिः ॥ १

क्रियापदान्वयः पादे यावतापीह सिध्यति ।
अवान्तरार्थन्तम्प्राहुरग्निमीळे पुरोहितम् ॥ २

अपेक्षा जायते पादे यज्ञस्य देवमृत्विजम् ।
कश्चिश्च तस्य कर्तव्यन्तत्रैतदुपतिष्ठति ॥ ३

पुरोहितेन रहितमग्निमीळे पदद्वयम् ।
पश्येत्तयोरन्यतरत्पादेऽन्यस्मिन्नवस्थितम् ॥ ४

नापेक्षते पदम्पूर्वन्नतरामुभयं यदि ।
तस्मात्पदान्तरेणैतदुभयम्पूरणं विदुः ॥ ५

ता मित्रस्य प्रशस्तय इन्द्राग्नी ता हवा महे ।
न पूरणोऽत्र तच्छब्दः पादे यस्मिन्व्यवस्थितः ॥ ६

अस्माकमद्य वामयं स्तोमो वाहिष्ठो अन्तमः ।
पुनर्युवाभ्यामित्युक्तन्न तदिच्छन्ति पूरणम् ॥ ७

यदा ते मारुतीर्विशस्तुभ्यमिन्द्र नि येमिरे ।
आवर्तते पदन्तेऽत्र नोभयोः पूरणे पदे ॥ ८

वेत्था हि वेधो अध्वनः पथश्च देवाञ्जसेति ।
पथोऽध्वनश्च भेदोऽत्र चकारेण प्रतीयते ॥ ९

प्रोतये वरुणम्मित्रमिन्द्रम्मरुतः कृष्वावसे इति ।
पुनः प्रयुज्यते तत्र भेदः सूक्ष्मोऽस्ति कश्चन ॥ १०

स नो नियुद्भिरा पृण कामं वाजेभिरश्विभिः ।
स्त्रीपुंविभेदादत्रापि नास्ति कश्चन पूरणः ॥ ११

पुरूण्यग्ने पुरुधेति मन्त्रान्ते श्रूयते पदम् ।
त्वे इत्येतत्पादभेदाद्बहवः सन्ति तादृशाः ॥ १२

वयं शूरेभिरस्तृभिरिन्द्र त्वया युजा वयम् ।
आवर्तते वयमिति सन्ति चान्येऽपि तादृशाः ॥ १३

इत्थं व्युत्पत्तिसिध्यर्थमृचोऽस्माभिरुदाहृताः ।
तासामाकृतिविद्विप्रो न मन्त्रार्थेषु मुह्यति ॥ १४

इति

---

(vi)

## अथ पिबा सोममभि व्याचिख्यासति माधवः।
## पादे समाने वक्तव्यम्पूरणेषु प्रदर्शयन् ॥

तस्मिन्पादे यदा पश्येत्तमेवाविकृतम्पुनः।
तम्पादपूरणम्ब्रूयादिति वृद्धेभ्य आगमः ॥ १

किन्नुदाहरणन्तत्र न याति देवः प्रवता।
याति देव उद्वतेति भिन्ने वाक्ये यतस्ततः ॥ २

आ याहि पूर्वीरतीति पादो नात्र निदर्शनम्।
दृश्यते पूरणो ह्येष आकारः केवलोऽपि सन् ॥ ३

त्वमग्ने व्रतपा असि मन्त्रस्तत्र निदर्शनम्।
तत्र प्रथम आकारो निरर्थक इति स्थितिः ॥ ४

ननु देवस्त्वमागत्य मर्त्येष्वपि च वर्तसे।
इति सार्थोऽत्र आकार इदन्तस्मिन्निदर्शनम् ॥ ५

अयन्ते अस्तु हर्यतः को वो वर्षिष्ठ आ नरः।
निपातो व्यतिरेकेण तस्माद्द्वौ च निदर्शनम् ॥ ६

स यन्ता विप्र एषां स यज्ञानामथा हि षः।
पादे द्वितीये तच्छब्द एकस्तत्रास्तु पूरणः ॥ ७

अस्मा एतन्मह्याङ्गूषमेकोऽस्मा इति पूरणः।
सर्वनामनिपातेषु समानेष्विति पूरणम् ॥ ८

नास्ति निर्वचनं येषां रूपभेदेऽपि तान्विदुः।
पूरणानेव कवय एमेनं सृजता सुते ॥ ९

स यजात्सेदु होतेति समानार्थौ विदू श्रुतौ ।
तत्रैकम्पूरणं विद्याद्बहवः सन्ति तादृशाः ॥ १०

अद्धेत्थेति द्वौ पठितौ सत्यनामसु वैदिकैः ।
न तावत्यन्तपर्यायौ सत्येनेति विपश्चितः ॥ ११

सत्यमद्धा नकिरन्यः सत्यमित्था वृषेदसि ।
सत्यन्तथा सत्यमित्थमित्यर्थस्तत्र दर्शितः ॥ १२

पुत्रिणा ता कुमारिणा कुमारा अर्भका इति ।
न पौनरुक्त्यमत्रास्ति तेनैको नात्र पूरणः ॥ १३

उदाहरणविद्विप्रः परिषत्सु न सीदति ।
प्रदर्शितास्ततोऽस्माभिरित्थन्नानाविधा ऋचः ॥ १४

इति

---

(vii)

## इन्द्रं वो नरः सख्याय व्याचिख्यासति माधवः। मत्वर्थीयेषु वक्तव्यम्पूरणेषु प्रदर्शयन् ॥

मत्वर्थीयान्मत्वर्थीयो न तु लोके प्रदृश्यते ।
प्रयुज्यते स वेदेषु पादम्पूरयितुम्पुनः ॥ १

वाजेभिर्वाजिनीवती रक्षोहत्याय वज्रिवः ।
मा यातुर्यातुमावतामिति पादा निदर्शनम् ॥ २

मत्वर्थीयो बहुव्रीहेर्नेष्यते शाब्दिकैरिह ।
अर्यमा सुदानव इति दृष्टो वेदेषु तादृशः ॥ ३

दस्रा दंसिष्ठेति पदे तथा रथ्या रथीतमा ।
दस्रा रथ्येति तत्राह पूरणे इति माधवः ॥ ४

स्तुतिर्विरम्याभिधानादर्थाभेदेऽपि गम्यते ।
दर्शनीयाविमौ देवावित्युक्त्वा भाषते पुनः ॥ ५

न दर्शनीयावपितु दर्शनीयतमामिति ।
तथा न रथ्यावपि तु रथनेतृतमाविति ॥ ६

दूरप्रयुक्तोपसर्गस्मरणार्थम्पुनः क्वचित् ।
उपसर्गाः प्रयुज्यन्ते न ते केवलपूरणाः ॥ ७

आवामश्वासः शुचय आ भारती भारतीभिः ।
पादे चतुर्थे आकारः प्रयुक्त उभयोरपि ॥ ८

अभि त्वा गोतमा गिरा बहवः सन्तितादृशाः ।
प्रागाख्यातात्प्रयुज्यन्ते ततः प्रागपि केचन ॥ ९



9 A

त्वन्नो अग्ने तव देव मरुतो मारुतस्य नः ।
एवंविधेषु मन्त्रेषु पूरणत्वन्न विद्यते ॥ १०

इति

(viii)

## यज्ञा यज्ञा वो अग्नये व्याचिख्यासति माधवः।
## आवृत्तेषु वदन्वाच्यमृगर्धर्चपदेष्वथ ॥

ऋचोऽर्धर्चाश्च पादाश्च सूक्तान्तेषु पुनः पुनः।
आवर्तमाना दृश्यन्ते सूक्तमध्येष्वपि क्वचित्॥ १

ये स्तोतृभ्यो नू ष्टुत चास्मभ्यन्तद्वसो दानाय।
ब्रह्मणस्पते त्वमस्य चतस्रश्च निदर्शनम्॥ २

अथार्धर्चस्तन्नो मित्रः सन्त्यप्यन्ये च तादृशाः।
प्रातर्मक्षिवति पादः स्यात्सन्त्यन्येऽपिच तादृशाः॥ ३

स्तुत्वान्यमन्यदेवानान्तत्तदाशासते पुनः।
ऋषयो यद्यदिच्छन्ति तदर्थास्ते न पूरणाः॥ ४

आवर्तयन्ति सूक्तीश्च यथार्चन्ननु स्वराज्यम्।
आवर्तन्ते विधेयाश्च मरुद्भिरग्न आ गहि॥ ५

सकृत्प्रदर्शितपदान्मन्त्रान्नाधीयते पुनः
अधीयते पुनः कांश्चित्किन्नु स्यात्तत्र कारणम्॥ ६

नू मे ब्रह्माण्यग्न इति पुनश्चाधीयते पदम्।
यज्ञेन यज्ञमिति च दशमे मण्डले पुनः॥ ७

तत्राहुः कारणं वृद्धा तस्मिन्नेव पुनः श्रुता।
नू म इत्यृगियं सूक्ते नैवमन्यत्र दृश्यते॥ ८

एवंविधाया आवृत्तेरन्वेष्टव्यम्प्रयोजनम्।
इति वक्तुम्पदावृत्तिः काकुर्वावृत्तिर्तो भवेत्॥ ९

यज्ञेन यज्ञमित्यस्याः पुनमेव च तादृशम् ।
तादृशम्पुरुषम्प्राहुर्भेदोऽयं ज्ञाप्यते पदात् ॥ १०

तिलमात्रे भिद्यमाने पुनश्चाधीयते पदम् ।
सुसूक्ष्मः शक्यते ज्ञातुन्नाप्राज्ञैरिति निर्णयः ॥ ११

पुनान इन्दवा भर सोम द्विबर्हसं रयिम् ।
पुनरागतमर्धर्चम्पुनश्चाधीयते पदम् ॥ १२

आवेष्ट्य योजना कार्या त्वं वसूनि पुष्यसि ।
द्विबर्हसं रयिन्तस्मात्पुनानोऽस्मभ्यमा भर ॥ १३

जिघृक्षितो यथान्धः स्याद्भक्तो विक्षिप्तमानसः ।
सन्दिग्धे च यथा काकः शाकल्योऽपहृतस्तथा ॥ १४

पूरणेष्विति वक्तव्यमध्यायादिषु दर्शितम् ।
व्युत्पत्त्यर्थम्बह्वृचानाञ्चतुर्थेऽस्माभिरष्टके ॥

इति

———

# ऋग्वेदानुक्रमणी

V

## आर्षानुक्रमणी

(i)

पञ्चमोऽथाष्टकस्तस्मिन्नध्यायादिषु वक्ष्यते।
ऋषिनामार्षगोत्रेषु विज्ञेयमिह वैदिकैः॥

ऋषिनामार्षगोत्राणां ज्ञानमायुष्यमुच्यते।
पुत्र्यम्पुण्यं यशस्यञ्च स्वर्ग्यन्धन्यममित्रहम्॥ १

ऋषिनामार्षगोत्रज्ञ एकैकस्य भवत्यृषेः।
शरत्सहस्रमतिथिर्दिव्यमर्चितपूजितः॥ २

ततः परं सुविपुलं स्वाध्यायफलमश्नुते।
भवति ब्राह्मणश्चापि ज्ञानस्यैतत्प्रयोजनम्॥ ३

मन्त्राणाम्ब्राह्मणार्षेयच्छन्दोदैवतविन्न यः।
याजनाध्यापनादेति छन्दसां यातयामताम्॥ ४

स्थाणुं वर्च्छति गर्तं वा पद्यते वा प्रमीयते।
पापीयान्भवतीत्यर्थमेवम्ब्राह्मणमाह तम्॥ ५

मन्त्राणाम्ब्राह्मणार्षेयच्छन्दोदैवतवित्तु यः ।
याजनाध्यापनाभ्यां स श्रेय एवाधिगच्छति ॥ ६

एतैः प्रयोजनैः सर्वैः शौनकेन प्रदर्शितैः ।
ऋषयो नामगोत्राभ्यामस्माभिः सम्प्रदर्शिताः ॥ ७

यदुच्यते पदज्ञानमृषिज्ञानमृतेऽपि नः ।
भवत्येवेह मन्त्रेषु किमृषिज्ञानमुच्यते ॥ ८

ऋषिनामार्षगोत्रेति यदेतच्छौनकोऽब्रवीत् ।
तदद्दष्टाय कथितन्नचादृष्टपरा वयम् ॥ ९

तदुच्यते स्वसूक्तानामादावन्तेऽथवा पुनः ।
ऋषयो नामगोत्राणि स्थापयन्तीह केषुचित् ॥ १०

वृष्णेशर्धायसूक्तादौ नोधसो नाम दृश्यते ।
आर्चनानससूक्तान्ते विभ्रतावर्चनानसम् ॥ ११

कण्वन्दद प्रचेतसो दिवोदासेभिरिन्द्र च ।
उतासि मैत्रावरुण इति गोत्रनिदर्शनम् ॥ १२

ऋषीणान्नामगोत्राणि दृष्ट्वा भ्राम्यन्ति लौकिकाः ।
जिज्ञासमाना मन्त्रार्थमतस्तेषान्निदर्शनम् ॥ १३

नामगोत्राणि मन्त्रेषु न निविष्टानि येषु तु ।
तेषु प्रदर्शनन्तेषां विस्पष्टप्रतिपत्तये ॥ १४

पदं ह्यज्ञायमानार्थन्दृष्ट्वा भ्राम्यन्त्यपि क्वचित् ।
स्यादृषेः किमिदन्नाम गोत्रं वाहो भवेदिति ॥ १५

नन्वेवं विनियोगश्च दर्शनीयस्त्वयाधुना ।
वक्तव्यो वा विशेषोऽत्र विशेषस्तत्र वक्ष्यते ॥ १६

यज्ञं विगाह्य तत्रत्यानर्थानभिदधत्यतः ।
यजुषामर्थविज्ञानन्नाकर्मज्ञस्य सिध्यति ॥ १७

आह शाखामिषे त्वेति न शाखा यजुषि श्रुता ।
न च क्रियापदन्दृष्टमपेक्षा जायते यतः ॥ १८

इषे त्वेत्याच्छिनत्तीति ब्राह्मणन्दृश्यते यदा ।
यजुषोऽर्थन्तदा स्पष्टमवगच्छन्ति लौकिकाः ॥ १९

ऋचस्तु परिपूर्णार्था नापेक्षन्ते बहिःस्थितम् ।
विनियोगस्ततस्तासामस्माभिर्न प्रदर्श्यते ॥ २०

किञ्चर्चो विनियुज्यन्ते न वाक्यार्थानुरूपतः ।
देवता श्रुतिसामान्यं विन्यासः प्रत्ययस्तथा ॥ २१

छन्दांसि सूक्तसङ्ख्या च शब्दावृत्तिर्ऋषिस्तथा ।
प्रयोजयन्त्यृचस्ते च न वाक्यार्थस्य भेदकाः ॥ २२

ननु च ब्राह्मणे साम्नामृषयश्चापि दर्शिताः ।
अर्थवादे च सर्वेषां यच्छाट्यायनकं विदुः ॥ २३

ऋचान्नैवंविधन्दृष्टमृषीन्केनाह शौनकः ।
ब्राह्मणादाकृतेरुक्तेस्तथा वृद्धोपदेशतः ॥ २४

ताण्डके शाट्यायनके तथाचैवास्मदीयके ।
अस्माभिरभिदृश्यन्ते ऋचामपि महर्षयः ॥ २५

माधुच्छन्दसमित्याह वायवायाहि दर्शत ।
आकृत्या दश सूक्तानि तदार्षाण्याह शौनकः ॥ २६

उक्तिश्च दृष्टा सूक्तेषु प्रवत्रेर्वविश्चिकेत ।
तमुत्वा गेतमो गिरा जेतारमपराजितम् ॥ २७

त्यान्नुक्षत्रियाँअवसूक्तं वृद्धोपदेशतः ।
मत्स्यानां जालबद्धानामार्षं यास्कोऽब्रवीदिति ॥ २८

प्रमाणेष्वपि सन्देहाद्विकल्पोक्तिरपि क्वचित् ।
चन्द्रमा अप्स्वन्तरिति सूक्ते कुत्सोऽथवा त्रितः ॥ २९

इति

———

(ii)

# अथाध्यायं जुषस्वेति व्याचिख्यासति माधवः।
# गोत्रेष्वृषीणां वक्तव्यमादावेव प्रदर्शयन् ॥

पित्रादिषु प्रसिद्धेन येन नाम विशेष्यते ।
वेदेष्वृषीणान्तद्गोत्रं ज्ञातव्यन्तत्र वैदिकैः ॥ १

जेतुः पिता मधुच्छन्दाः श्यावाश्वस्य पितामहः ।
पितामहो गौरिवीतेर्गोत्रत्वेन प्रदर्शिताः ॥ २

अपालात्रिकुले जाता विश्ववारा च तादृशी ।
दूरस्थोऽत्रिस्तयोर्गोत्रम्बहवः सन्ति तादृशाः ॥ ३

पितरौ मित्रावरुणौ वसिष्ठस्येत्यृचि श्रुतम् ।
उतासि मैत्रावरुणः प्रवरेषु पुनस्तयोः ॥ ४

पुत्रस्थाने समावेशाद्वसिष्ठो मैत्रावरुणिः ।
तत्राहुः कारणं प्राज्ञा विदेहोऽभिशशाप तम् ॥ ५

ऋषे भव विदेहस्त्वमृषिः शप्तः समाविशत् ।
अहोरात्रे योगवलात्तौ मित्रावरुणौ स्मृतौ ॥ ६

ददर्श मन्त्रांश्च तदा पुत्रश्चाभूत्पुनस्तयोः ।
क्रमेणार्षेयवरणमुपपन्नन्तयोरिति ॥ ७

विश्वामित्रजमदग्नी तथा वसिष्ठ एव च ।
इन्द्रोऽगस्त्यो मरुतो गोत्रमेषु प्रदृश्यते ॥ ८

यद्यप्यृषीणां सप्तानां ब्राह्मणेषु न दृश्यते ।
गोत्रन्तथापि विज्ञेयमृक्षु गोत्रनिदर्शनात् ॥ ९

असगोत्रो भवेच्छ्राद्धे सगोत्रात्तन्तुमाहरेत् ।
न प्रयच्छेद्दुहितरं सगोत्रायेति च स्मृतिः ॥ १०

किमेतेषु मनुष्याणां गोत्रमित्यभिधीयते।
वक्तव्यं छान्दसैर्नैतद्धर्मशास्त्रपरैरिव ॥ ११

कौतूहलनिवृत्त्यर्थमथ चास्माभिरुच्यते ।
गोत्राणान्तु सहस्राणि प्रयुतान्यर्बुदानि च ॥ १२

कुलाख्याभिमतानीह तानि गोत्राणि सन्तु नः ।
न तु स्मरन्ति चैतानि सम्प्रति ब्राह्मणा इमे ॥ १३

तर्हिं गोत्रसहस्राणि प्रयुतान्यर्बुदानि च ।
षट्छतैः सङ्गृहीतानि कृतबोधायनादिभिः ॥ १४

स्मरन्ति तानि चित्तेषु सम्प्रतित्वेन मानवाः ।
मार्कण्डेयोऽस्मि माण्डूकस्तथा माण्डव्य इत्यपि ॥ १५

प्रदर्शयन्बहून्पक्षान्न कथञ्चिदपीच्छति ।
इतरेतरसम्बन्धन्तदध्यायामिति ब्रुवन् ॥ १६

यदि ह्येतानि गोत्राणि मार्कण्डेयः समुद्वहेत् ।
माण्डूकस्य दुहितरमसगोत्रा हि सा यतः ॥ १७

तस्माद्वत्सादिकं गोत्रमिति माधवदर्शनम् ।
आपस्तम्बश्च तानेव वेददृष्टानदर्शयत् ॥ १८

इति

---

( iii )

## उग्रो जज्ञे वीर्यायेति व्याचिख्यासति माधवः।
## अमितेषु मितर्षीणामागमे कारणं वदन् ॥

---

जातवेदस इत्येतत्प्रसङ्गात्सूक्तमागतम् ।
कुत्समध्ये कश्यपार्षं कुत्सेन बहवः स्तुताः ॥ १

औषसो द्रविणोदाश्च शुचिर्वैश्वानरस्तथा ।
जातवेदसमप्यग्निमथ तुष्टाव कश्यपः ॥ २

स्तुतो मरुत्वान्कुत्सेन तत इन्द्रः प्र मन्दिने ।
वार्षागिरैस्तत्प्रसङ्गात्स यो वृषेति स स्तुतः ॥ ३

कुत्सस्त्रितश्च पतितौ कूपे तुष्टुवतुश्च तौ ।
तेन त्रितस्यागमनश्चन्द्रमा अप्स्वन्तरिति ॥ ४

मध्ये गृत्समदस्यागादृषिः सोमाहुतिस्तथा ।
तत्रेदङ्कारणम्प्राहुरग्निः सूक्तैस्त्रिभिः स्तुतः ॥ ५

जागताभ्यान्त्रैष्टुभेन त्वमग्ने द्युभिस्त्वमिति ।
वाजयन्निव नू रथान्गायत्रं सूक्तमन्ततः ॥ ६

गायत्रात्प्राक्सोमाहुतिर्हुवे व इति दृष्टवान् ।
क्रमेण त्रीणि च्छन्दांसि त्रिष्टुबादीनि भार्गवः ॥ ७

अन्यस्मिन्पुनरध्याये छन्दसोऽन्यस्य दर्शनम् ।
नि होता होतृषदन इतिगृत्समदोऽकरोत् ॥ ८

पुनर्गृत्समदस्यैव मध्ये कूर्मोऽभ्यगादृषिः ।
इमा गिर आदित्येभ्यस्त्रीणि सूक्तानि दृष्टवान् ॥ ९

बहुदैवतसामान्यात्सूक्तं हि बहुदैवतम् ।
ऋतन्देवाय कृण्वते तद्वक्ष्यत्यपित ऋषिः ॥ १०

विश्वामित्रो द्वादशभिः स्तुतवानग्निमादितः ।
सूक्तैस्तैरनुवाकश्च समाप्तं शौनकोऽब्रवीत् ॥ ११

अग्निमेव पुनश्चास्तौदग्ने सहस्व पृतनाः ।
मध्ये विरामो विस्पष्टस्तत्रान्येषां समागमः ॥ १२

मण्डलादौ सोमस्येति सूक्तेऽग्निः प्रथमं स्तुतः ।
वैश्वानरीयसूक्तेन ततो वैश्वानरः स्तुतः ॥ १३

उपक्रम्य पुनश्चापि तावेव क्रमशः स्तुतौ ।
ऋषीणामृषभादीनामतो मध्ये समागमः ॥ १४

आग्नेयत्वाच्च सूक्तानामाग्नेयेषु समागमः ।
ऐन्द्रात्प्राक्स्तूयते चाग्निः सोमस्येति प्रधानतः ॥ १५

इच्छन्ति त्वेति व्यधिकं सूक्तमैन्द्रन्तथोत्तरम् ।
छन्दोदैवतसङ्ख्यानां समत्वात्कुशिकागतिः ॥ १६

इन्द्रापर्वता बृहता विश्वामित्रार्षमुच्यते ।
अनुवाकस्समाप्तश्च तत आगात्प्रजापतिः ॥ १७

इमम्महे विदथ्याय त्रीण्यपश्यत्प्रजापतिः ।
वैश्वदेवानि सूक्तानि वैश्वदेवमथामितः ॥ १८

इन्द्रा को वां वरुणेति सूक्तमाहुर्द्विदैवतम् ।
एष स्य भानुरिति च वामदेवस्तयोर्ऋषिः ॥ १९

त्रसदस्युस्तयोर्मध्ये सौहोत्रावपिचागतौ ।
द्विदैवत्यत्वसामान्यादावापस्तत्र युज्यते ॥ २०

तत्राजगाम प्रथमन्त्रसदस्युर्मम द्विता ।
इन्द्रा को वामितीन्द्रस्य प्रसङ्गादिति निश्चयः ॥ २१

ऋषिर्नास्त्यमितोऽत्रीणाङ्किन्त्ववत्रिः पुनरागतः ।
ददर्शाबोध्यग्निरिति सूक्तश्च तत उत्तरम् ॥ २२

द्विदैवत्येषु सूक्तेषु यान्यासन्नाश्विनानि च ।
छन्दश्चानुगुणन्तत्र तस्मात्स पुनरागतः ॥ २३

अमितर्षौ भरद्वाजे वीतहव्योऽभ्यगादृषिः ।
आद्यानुवाकावसान इममू षु वो अतिथिम् ॥ २४

अभूरेको रयिपते सुहोत्रः सूक्तयोर्ऋषिः ।
तद्भ्रातरौ ददृशतुश्चत्वारि क्रमशस्ततः ॥ २५

शुनहोत्रो नरश्चेति भरद्वाजस्ततोऽमितः ।
सर्वाणि त्रैष्टुभान्येव सूक्तानीन्द्रश्च देवता ॥ २६

स्थितानि चानुवाकस्य मध्ये नाद्यन्तयोः पुनः ।
भूयइद्वावृधेसूक्तम्पञ्चर्चन्तत्प्रसङ्गतः ॥ २७

पञ्चर्चानामावपनन्तत्रेति कवयो विदुः ।
बार्हस्पत्यस्य यो रयिवः शंयोरातृणपाणिकात् ॥ २८

स्वादुष्किलेति तन्मध्ये मितो गर्गः समागतः ।
शंयुरस्तौच्त्रिभिः सूक्तैरिन्द्रङ्गर्गस्तदाभ्यगात् ॥ २९



2

यज्ञा यज्ञा वैश्वदेवमुत्तराण्यप्यृजिश्वनः ।
सूक्तानि वैश्वदेवानि पायुरन्ते व्यवस्थितः ॥ ३०

आगच्छन्ति तत्कुलीनास्तस्य मध्ये मितर्षयः ।
छन्दोदैवतसंख्यार्थजन्मक्रमविरामतः ॥ ३१

---

इमां सूक्ष्मेक्षिकां कुर्वन्न मन्त्रार्थेषु मुह्यति ।
बहुभिर्हेतुभिः कुर्यात्तां सर्वत्रेति पण्डिताः ॥

इति.

iv

## प्रब्रह्मैतुसदूध्यायं व्याचिख्यासति माधवः ।
## अनेकर्षीषु सूक्तेषु वक्तव्यं सम्प्रदर्शयन् ॥

ऋषयः सूक्तमेकं सदपश्यन्बहवः कथम् ।
सङ्गीभूय तपस्तप्त्वा सर्व एव सहापठन् ॥ १

इति केचन मन्यन्ते माधवस्य न तन्मतम् ।
नाम्नि सूक्ते श्रूयमाणे शक्यमेवम्प्रभाषितुम् ॥ २

एना वयस्पयसेति संवादे यन्नदीवचः ।
तत्रैवं शक्यते वक्तुन्नाम ह्यत्र निवेशितम् ॥ ३

यमग्नेवाजसातमसूक्ते नाम च कीर्त्यते ।
प्रयस्वन्तो हवामहे शक्यन्तत्रापि भाषितुम् ॥ ४

एवाँ अग्निं वसूयवः सूक्ते सामान्यतः कृतः ।
वसूयुनामनिर्देशः सन्त्यन्येऽपि च तादृशाः ॥ ५

अबोध्यग्निः समिधेति सूक्तम्बुधगविष्ठिरौ ।
सहैकन्द्वौ ददृशतुरेकः सूक्ते तु कीर्त्यते ॥ ६

गविष्ठिरो नमसेति बुधस्त्वत्र न कीर्तितः ।
यदिन्द्राहं यथा त्वञ्च सूक्तमार्षन्द्वयोर्मतम् ॥ ७

अहं यथा त्वमीशीय स्तोता म इति दृश्यते ।
एकवचनत्र निर्देशो न त्वावामिति दृश्यते ॥ ८

आयदिन्द्रश्च ददृहे सहस्रं वसुरोचिषः ।
एकवचनत्र निर्देशस्तिष्ठं वनस्य मध्य आ ॥ ९

मत्स्यानाञ्जालबद्धानान्त्यानित्यार्षे विदुर्बुधाः ।
तत्रापि दृष्टो निर्देश उतत्वामदिते महि ॥ १०

एवंविधेषु सूक्तेषु तस्मादेक ऋषिर्मतः ।
प्रधानोऽन्ये त्वप्रधाना इति मन्यामहे वयम् ॥ ११

स च प्रधानो निर्देशादस्माभिर्ज्ञायते क्वचित् ।
गविष्ठिरो नमसेति प्राधान्यं ह्यवगम्यते ॥ १२

यदिन्द्राहं यथेत्यत्र न विशेषः प्रतीयते ।
गोसूक्ती वाश्वसूक्ती वा नैकोऽपि ह्यत्र कीर्त्यते ॥ १३

तम्प्रत्नथेत्यवत्सारः काश्यपोऽन्यैः सहर्षिभिः ।
तस्मिन्सूक्ते समुद्दिष्टो ददर्शेत्यवगम्यते ॥ १४

ऋज्राश्वः प्रष्टिभिरिति विस्पष्टमृषिराह च ।
प्राधान्यश्चात्मनो दृष्टौ भ्रातृणामप्रधानताम् ॥ १५

प्रह्वाः प्राञ्जलयः सर्वे इन्द्रन्तुष्टूषवः स्थिताः ।
उपशृण्वन्स्तुतेष्विन्द्रमृज्राश्वः स्तुतवान्स्वयम् ॥ १६

ऋषिरेकान्ददर्शर्चमृषिरेकामथापरः ।
इति केचन मन्यन्ते तदयुक्तमिति स्थितिः ॥ १७

शतं वैखानसान्प्राहुः सहस्रं वसुरोचिषः ।
न तावत्य ऋचस्तेषां वृद्धेष्वस्तु विनिर्णयः ॥ १८

इति

# V

## यदद्य सूर्येत्यध्यायं व्याचिख्यासति माधवः ।
## अष्टकादिषु वक्तव्यमादितः सम्प्रदर्शयन् ॥

अष्टकाध्यायविच्छेदः पुराणैर्ऋषिभिः कृतः ।
उद्ग्राहार्थम्प्रदेशानामिति मन्यामहे वयम् ॥ १

वर्गाणामपि विच्छेद आर्ष एवेति निश्चयः ।
ब्राह्मणेष्वपि दृश्यन्ते वर्गसंशब्दनादि च ॥ २

विभज्यन्तेऽथ सूक्तानि समधा तत्र वर्गशः ।
अन्ताल्लोपोऽपि वृद्धिश्च क्रियेतेऽनुगुणाविति ॥ ३

अध्यापनाय शिष्याणां विभागो वर्गशः कृतः ।
सुग्रहो हि भवत्यल्पः शक्यो धारयितुन्ततः ॥ ४

सङ्घीभूयाभवत्सर्वमेकम्मण्डलमादितः ।
आसीदृषिर्मधुच्छन्दा मधुरोत्तममन्त्रदृक् ॥ ५

तस्मादग्रे प्रादुरभूत्काण्वो मेधातिथिस्ततः ।
शौनःशेपानि छन्दांसि मधुराणि ततोऽभवत् ॥ ६

हैरण्यस्तूपछन्दांसि काण्वानि च ततः परम् । ७

## अत्रशाट्यायनकम् ।

वैश्वामित्रो मधुच्छन्दा अकामयत मुख्यें ब्रह्मवर्चसि स्यामिति । इति ॥

अमहान्ति निवेश्यान्तर्मण्डलानि महर्षिभिः ।
कृतो महद्भ्यां रक्षार्थमथ तेषां परिग्रहः ॥ ८

समानमेतद्यज्ञस्य
सामिधेनीप्रभृतीषु ब्राह्मणैर्यद्विधीयते ॥ ९

भूयिष्ठं यज्ञसंयुक्तमुत्तमम्मण्डलं विदुः ।
पितृमेधादिकन्तस्मादन्ततश्च निवेशितम् ॥ १०

मध्यस्थानाम्मण्डलानाङ्क्रमो योऽयं व्यवस्थितः ।
तस्य कारणमन्वेष्टुं सङ्ख्यास्माभिः प्रदर्श्यते ॥ ११

आद्यन्तयोर्मण्डलयोर्नवोने द्वे शते विदुः ।
त्रिचत्वारिंशद्द्विषष्टिर्द्व्यूना षष्टिरनन्तरम् ॥ १२

सप्ताशीतिः पञ्चाधिकसप्ततिस्तदनन्तरम् ।
चतुरधिकञ्चशतमष्टोनञ्च शतन्ततः ॥ १३

चतुर्दशञ्च शतकं सूक्तानाङ्क्रमशो विदुः ।
मध्यस्थानाम्मण्डलानामिति सङ्ख्या यथाक्रमम् ॥ १४

रक्षार्थमथ वाक्यानि कळायो लवनन्ततः ।
रातिनश्च दमूनाश्च सदनम्मथनन्तथा ॥ १५

वनाय क्रोधनो द्वे च भयकृद्युद्धकृत्तथा ।
क्रमेण दश वाक्यानि सायाह्नं स्यात्समन्वये ॥ १६

वामदेवस्तृतीयश्च भरद्वाजश्च पञ्चमः ।
कण्वश्च सप्तमः सूक्तैः क्रमवृद्धैर्भवेत्क्रमः ॥ १७

न च क्रमेण वर्धन्त ऋचो गार्त्समदादिषु ।
तस्मादुक्तोऽपि नैतेषामष्टानां सिध्यति क्रमः ॥ १८

वाक्यैरेतैर्विजानीयान्मण्डलानामृचः क्रमात् ।
दशानान्दशभिः प्राज्ञस्तथा देयो धरावनिः ॥ १९

साध्यश्चनो धेहिमेऽन्नं शूरसूनुर्मतोऽसि नः ।
गुरुदाने युगान्तस्य सिद्धान्यस्य निशीथके ॥ २०

शतैश्चतुर्भिरधिकमयुतङ्गाणितम्मया ।
द्वे च यान्यतिरिच्येते द्विपदाश्चात्र सङ्गताः ॥ २१

पृथग्यदातु गणनन्द्विपदानान्तदाधिका ।
चतुश्शतादशीतिश्च वाक्यश्च ग्रहवानयम् ॥ २२

एकर्च्च एको वर्गः स्याद्दृचौ द्वौ नवकावुभौ ।
एकोनं स्यात्त्रिकशतश्चतुष्कम्पञ्चसप्ततिः ॥ २३

अधिकश्च शतं वर्गाश्चतुःपञ्चाशदष्टकाः ।
एकविंशशतम्प्राहुः सप्तकानाञ्च वैदिकाः ॥ २४

शतानि त्रीणि षट्कानाञ्चत्वारिंशत्त्र्यस्तथा ।
पञ्चकानां सहस्रञ्च द्वे शते नवकन्तथा ॥ २५

ऋचान्दशसहस्राणि ऋचाम्पञ्चशतानि वै ।
ऋचामशीतिः पादश्च पाठोऽयन्न समञ्जसः ॥ २६

अपहायाथ पापस्य क्षादनाय च पण्डितः ।
ऋचः कालेन गणयेत्तन्तुशुद्धिर्भविष्यति ॥ २७

मण्डलं वामदेवस्य तृतीयञ्च तथाष्टमम् ।
स्यान्मण्डलम्पावमानङ्क्रमवृद्धे क्रमो भवेत् ॥ २८

विश्वामित्रो वामदेवात्सम्पन्नोऽप्यतिरिच्यते ।
अतिरेकश्च विज्ञेयो गायत्रीकरणाद्बुधैः ॥ २९

अत्र ब्रूमो गृत्समदः क्षत्रियो ब्राह्मणोऽभवत् ।
इन्द्रप्रसादादस्यासन्वाचश्च हृदयङ्गमाः ॥ ३०

अग्रे तस्मात्प्रादुरभूद्विश्वामित्रस्ततोऽभवत् ।
तस्यापि मधुरा मन्त्रा ब्राह्मण्यमपि लब्धवान् ॥ ३१

दृष्टवेदास्ततोऽपश्यन्पुनश्च तपसान्विताः ।
मण्डलन्नवमन्तेन तदन्ते सन्निवेशितम् ॥ ३२

प्रगाथे मण्डले बह्व्यो नाराशंस्य ऋचस्ततः ।
सन्निवेशोऽन्ततस्तस्य मध्यस्थेष्विति संस्थितिः ॥ ३३

अन्येषाङ्क्रमवृद्धानां सन्निवेशः क्रमादभूत् ।
चतुर्णां वामदेवादेर्मण्डलानामिति स्थितिः ॥ ३४

अथानुवाकविच्छेदो बहुभिर्हेतुभिः कृतः ।
सुरूपकृत्नुमित्यैन्द्रात्प्रागेकः कल्पितो बुधैः ॥ ३५

ऐन्द्राण्यथाष्टौ सूक्तानि विभक्तानि समन्द्विधा ।
षट्सूक्तावनुवाकौ द्वौ समौ मेधातिथेरपि ॥ ३६

शौनःशेपोऽनुवाकस्तु शुनःशेपेन कल्पितः ।
हैरण्यस्तूपकाण्वौ च प्रास्कण्वाद्याश्च सप्तकाः ॥ ३७

गोतमस्योपप्रयन्त सूक्तानां विंशतिं विदुः ।
एकादशकनवकावनुवाकौ च कल्पितौ ॥ ३८

ऐन्द्रमेकादशं सूक्तमैन्द्रैः पूर्वैः समन्वितम् ।
इति सर्वानुवाकेषु कार्या सूक्ष्मेक्षिका बुधैः ॥ ३९

इति

(vi)

# प्रत्यु अदर्शि आयती व्याचिख्यासति माधवः । कारणं सूक्तभेदस्य मुखतः सम्प्रदर्शयन् ॥

ऋषिच्छन्दोदेवतार्थाः सूक्तभेदस्य हेतवः ।
मन्यन्ते बह्वृचाः केचिदर्थमेव विभेदकम् ॥ १

नवमे मण्डले भेदः सूक्तानामृषिभिः कृतः ।
स्वादिष्ठया मदिष्ठया चत्वार्याहुर्निदर्शनम् ॥ २

गायत्राण्येव चत्वारि सोम एव च देवता ।
मधुच्छन्दःप्रभृतयश्चत्वार ऋषयोऽभवन् ॥ ३

छन्दोदेवतयोः साम्ये सन्ति सूक्तानि मण्डले ।
ऋषिभेदेन भिन्नानि पावमानाभिशब्दिते ॥ ४

इन्द्रं विश्वा अवीवृधंश्छन्दोभेदेन भिद्यते ।
देवताभेदभिन्नानि वायवा याहि दर्शत ॥ ५

आत्मदृष्टेषु सूक्तेषु क्वचित्संयोजयन्ति च ।
दृष्टानन्येन ऋषिणा मन्त्रानिह महर्षयः ॥ ६

आङ्गिरसेन घोरेण दृष्टामेकामिमामृचम् ।
अस्मे प्र यन्धि मघवन्विश्वामित्रस्तथाऽकरोत् ॥ ७

अन्त्यन्तृचम्मण्डलस्य जामदग्न्यं वदन्ति हि ।
आ नो मित्रावरुणेति सूक्तान्ते च न्यवेशयत् ॥ ८

सहासनकृतान्तत्र सम्प्रीतिं कारणं विदुः ।
आत्ममन्त्रसमांश्चैते मन्त्रान्पश्यन्ति सङ्गताः ॥ ९

बहवः सन्ति ननु च द्रष्टारो द्वैपदस्य ये । द्विपदा एव द्वैपदम् । यथा प्रतिमैव प्रातिमम् । स्वार्थेऽण् ।
बन्धुः सुबन्धुरित्येते सत्यन्ते भ्रातरोऽभवन् ॥ १०

द्विपदाश्च समानीताः सूक्तमेकमतोऽभवत् ।
ददृशुः काल एकस्मिन्सर्वे च सह सङ्गताः ॥ ११

तदेतच्छाट्यायनके विस्पष्टम्प्रतिपादितम् ।
यथा दृष्टमिदं सूक्तन्तत्तथैवावधार्यताम् ॥ १२

ऋष्यादिभेदः प्रायेण सूक्तभेदस्य कारणम् ।
कारणान्तरमप्यस्ति दृश्यते यत्कचित्कचित् ॥ १३

अर्थानुरोधादपि च सूक्तानाम्भेद इष्यते ।
ऋषिच्छन्दोदैवतेषु समानेष्वपि च क्वचित् ॥ १४

तत्रोदाहरणान्याहुर्नवमे मण्डले बुधाः ।
णि एकर्षिकानि सूक्तानि मन्द्रया सोम धारया ॥ १५

सुरूपकृत्नुमूतय इति सूक्तेषु सप्तसु ।
देवतेन्द्र ऋषिश्चैको भिद्यते केन हेतुना ॥ १६

छन्दश्च षण्णाङ्गायत्री सप्तमेऽनुष्टुबागता ।
गायन्ति त्वा गायत्रिणः कामन्तत्तेन भिद्यताम् ॥ १७

नोपपादयितुं शक्यम्मनुष्यैरत्र कारणम् ।
तथापि कारणङ्किञ्चित्कथ्यमानमिमं शृणु ॥ १८

सुरूपकृत्नुसूक्तेन यज्ञ आगन्तुमिच्छति ।
आगते सति कर्तव्यमा त्वेतेति च भाषते ॥ १९

युञ्जन्ति ब्रध्नमित्यस्मिन्यथा वै सहकारिभिः ।
यस्मिंश्च काल आयाति तत्सर्वङ्कथितं विदुः ॥ २०

इन्द्रमिद्गाथिनो बृहदिति सूक्तेन भाषते ।
अनेकाह्वात्सद्भावमिन्द्रमाहात्म्यमेव च ॥ २१

बहवो यद्यपीन्द्र त्वां विह्वयन्त इमे जनाः ।
तान्सर्वानपहाय त्वमस्माकम्भव केवलः ॥ २२

एन्द्र सानसिमित्यत्र स्तुतादिन्द्रादभीप्सति ।
धनमात्माभिलषितं सञ्जिहीर्षति च स्तुतिम् ॥ २३

स्तुतमिन्द्रञ्जिगमिषुमृषिस्त्यक्तुमशक्नुवन् ।
इन्द्रेहीति पुनः स्तौति याचते च धनम्पुनः ॥ २४

उक्तमर्थमिमं सर्वं सप्तमेनानुभाषते ।
आनुष्टुभेन सूक्तेन गायन्ति त्वेत्यृषिः पुनः ॥ २५

कवित्वस्यानुरोधाय तमेवार्थं पुनः क्वचित् ।
अन्यम्प्रकारमाश्रित्य पश्यन्ति च महर्षयः ॥ २६

भेदस्तत्रापि सूक्तानाम्भवतीति विनिश्चयः ।
नासत्याभ्याम्बर्हिरिवसूक्तान्याहुर्निदर्शनम् ॥ २७

स्तौत्यश्विनावृषिस्तेषु सङ्गृह्य च विगृह्य च ।
कक्षीवान्दैर्घतमसः कवित्वं सम्प्रदर्शयन् ॥ २८

पश्यन्ति तांस्तानुद्दिश्य कामानिह महर्षयः ।
ये ये सूक्तेषु दृश्यन्ते ते च भेदस्य हेतवः ॥ २९

तथा दर्शनकालस्य भेदश्चैषां विभेदकः ।
स च भेदो ब्राह्मणेषु मन्त्रेष्वपि च दृश्यते ॥ ३०

---

महावाक्यानुरोधेन सैषा सूक्ष्मेक्षिका बुधैः ।
कार्या भिन्नेषु सूक्तेषु शुद्धमर्थमभीप्सुभिः ॥

इति.

( vii )

# तिस्रो वाचोऽधुनाध्यायं व्याचिख्यासति माधवः।
# ऋषौ चार्षे च वक्तव्यम्प्रागनुक्तम्प्रदर्शयन् ॥

---

मनुष्यत्वे मन्त्रकृत ऋषयः परिकीर्तिताः ।
आर्षेयवरणं तेषान्तथा च ब्राह्मणं शृणु ॥ १

न देवैर्न मनुष्यैरार्षेयं वृणीत । ऋषिभिरेवार्षेयं वृणीत । इति ॥

न मन्त्रदर्शनात्पूर्वमृषित्वम्प्रत्यपद्यत ।
श्यावाश्व इत्यवोचाम पञ्चमे मण्डले वयम् ॥ २

तेषामृषीणां ज्ञातव्यङ्गोत्रमित्याह शौनकः ।
देवा देव्योऽप्सरो नद्यो गन्धर्वाश्च स्वयम्भुवः ॥ ३

कार्याण्युद्दिश्य जायन्ते यदि देवादयोऽपि च ।
मानुषेषु कुलेष्वंशैर्गोत्रं ज्ञेयमिति स्थितिः ॥ ४

विपाट्छुतुद्र्योरिन्द्रस्य मरुतामदितेस्तथा ।
नोवाच शौनको गोत्रमिति तत्र निदर्शनम् ॥ ५

इच्छन्निन्द्रसमम्पुत्रमभ्यध्यादङ्गिरा ऋषिः ।
अभूदिन्द्रः स्वयन्तस्य तनयः सव्यनामकः ॥ ६

इच्छन्निन्द्रसमम्पुत्रश्चचार कुशिकः पुरा ।
ऐषीरथिर्ब्रह्मचर्यङ्गाधिनोऽस्य सुतोऽभवत् ॥ ७

ज्ञातव्यमनयोर्गोत्रं विद्यमानमिति स्थितिः ।
नामार्षयोस्तु विज्ञानङ्कार्यं सर्वत्र पण्डितैः ॥ ८

ऋषिः शाक्त्यो गौरिवीतिरत्रीणाम्मण्डले कथम् ।
आजगाम परित्यज्य वासिष्ठम्मण्डलं स्वकम् ॥ ९

समिद्धो अग्निर्दिवीति विश्ववारार्षमुच्यते ।
तस्याः पतिर्गौरिवीतिरपश्यत्सूक्तमुत्तरम् ॥ १०

सञ्ज्ञास्पत्यमिति ब्रूते विश्ववारा ततो वयम् ।
मन्यामहे पतिन्तस्या गौरिवीतिमिहागतम् ॥ ११

मध्येऽत्रीणामाङ्गिरसो धरुणो नाम कश्चन ।
सूक्तं प्र वेधस इति प्रसङ्गाद्दृष्टवानृषिः ॥ १२

तेनाभिषज्यत्सूक्तेन धरुणोऽत्रिमृषिम्पुरा ।
तथैव तत्रात्रिमस्परिति सूक्तान्ततः श्रुतम् ॥ १३

वर्तमाना मातृकुले तत्रत्यैर्ऋषिभिः सह ।
तादृशान्ददृशुर्मन्त्रानिति केचिदवास्थिताः ॥ १४

समानोदकसामान्याच्छ्यावाश्वः कण्वमण्डले ।
अग्निनेन्द्रेणसूक्तानि ददर्श पुनरागतः ॥ १५

ऊह्यानि कारणान्येवम्मण्डलान्तरसङ्क्रमे ।
अन्येषामपि दृष्टानामिति वृद्धेभ्य आगमः ॥ १६

ऋषयो बह्वृचैरित्थं स्मर्यन्ते सामगैरपि ।
स्मरन्त्याध्वर्यवो नैवन्तत्र किङ्कारणं वदेत् ॥ १७

प्रजापतिश्च सोमश्च तृतीयोऽग्निस्तथैवच ।
विश्वे देवाः स्वयम्भूश्च तेषाङ्काण्डर्षयो विदुः ॥ १८

यजुष्यृचश्च बहुभिर्दृष्टाः सन्ति महर्षिभिः ।
काण्डान्यकुर्वन्नृषयः स्मर्यन्तेऽध्वर्युभिश्च ते ॥ १९

पठन्त्यवान्तरानादौ ब्राह्मणानाङ्कठाः पुनः ।
ऋषीन्व्याख्यानभूतानामनेकान्यजुषामपि ॥ २०

काण्डर्षिस्मरणादेव भवत्यभ्युदयस्ततः ।
स्मरन्त्यवान्तरान्नैत इति वृद्धेभ्य आगमः ॥ २१

ब्राह्मणान्नामधेयाच्च शाखास्वन्यास्वपि द्विजाः ।
तानेवर्षीन्विजानन्ति य ऋग्वेदे व्यवस्थिताः ॥ २२

साम्नां रथन्तरादीनाम्भिन्नैवात्यन्तमाकृतिः ।
ताण्डके शाट्यायनके भिद्यन्त ऋषयो न तु ॥ २३

भरद्वाजोऽकामयत वसिष्ठोऽकामयतेति ।
उभयत्रार्थवादानाम्पश्यामो ह्येकरूपताम् ॥ २४

# अध्वर्यूणान्ब्राह्मणानि ॥

कृणुष्व पाज इत्यत्र वामदेवस्यर्चो याज्यानुवाक्या भवन्तीत्युक्तम् ।
दिवस्परि प्रथममित्यत्रैतेन वै वत्सप्रीर्भालन्दन इत्युक्तम् ।
अयं सो अग्निरिति विश्वामित्रस्य सूक्तम्भवतीत्युक्तम् ।
ऋषेर्ऋषेर्वा एता निर्मिता यत्सामिधेन्य इत्युक्तम् ।

एवमैक्ये रूपभेदः पाठभेदश्च किङ्कृतः ।
साम्नामृचाश्च विविधः कथयन्त्यत्र वैदिकाः ॥ २५

भूयो भूयस्तपस्तप्त्वा वेदान्नानाविधानिति ।
ऋषयो ददृशुः पूर्वे तन्तमर्थमभीप्सवः ॥ २६

यजुष्ष्वक्षु च वैरूप्ये रूपस्वरकृते बुधाः ।
अर्थद्वैरूप्यमपि च कारणम्प्रतिजानते ॥ २७

ऋग्विश्वो देवस्य नेतुर्भवेत्तत्र निदर्शनम् ।
विश्वे बहुवचनान्तम्पठन्त्याध्वर्यवः पदम् ॥ २८

इति

---

( viii )

दूरादिहेव यत्सेति व्याचिख्यासति माधवः ।
पितृपुत्रसमावेशे वक्तव्यं सम्प्रदर्शयन् ॥

कण्वस्य पुत्रः प्रस्कण्वः प्र वो यह्वम्पितुर्मतम् ।
आर्षमग्ने विवस्वच्च पुत्रस्य तदनन्तरम् ॥ १

मधुच्छन्दाः पिता पुत्रमाहुस्तस्य धनञ्जयम् ।
अग्निमीळे मधुच्छन्दा इन्द्रं विश्वा धनञ्जयः ॥ २

विश्वामित्रः पिता पुत्र ऋषभस्तस्य कीर्तितः ।
पितुः सोमस्य मेत्यार्षमृषभस्य प्र वः स्मृतम् ॥ ३

अर्चनानाः पिता पुत्रः श्यावाश्वस्तस्य कीर्तितः ।
ऋतस्य गोपावधितिष्ठथः पितुरार्षं विदुः ॥ ४

प्र श्यावाश्व पितुः पूर्वम्पुत्रः श्यावाश्व आगतः ।
पितृपुत्रविपर्यासे किन्नु स्यादत्र कारणम् ॥ ५

बहूनि पश्यन्सूक्तानि श्यावाश्वः पूर्वमागतः ।
अर्चनानाः पिता पश्चादिति वृद्धेभ्य आगमः ॥ ६

विश्वामित्रपिता गाधिः स विश्वामित्रमण्डले ।
पश्चात्पुत्रादाजगाम स चासीद्दषिरल्पदृक् ॥ ७

कतस्य पुत्र उत्कीलस्तस्य सूक्ते वि पाजसा ।
पितुश्च सूक्ते द्वे एव समिध्यमानो भवा नः ॥ ८

ऋचस्त्रयोदशापश्यत्सूनुर्दश पिता ततः ।
अनाश्रित्य सूक्तसाम्यम्पिता पश्चात्समागतः ॥ ९

सुहोत्रः शुनहोत्रश्च भारद्वाजा नरस्तथा ।
समागता यथाज्येष्ठम्भरद्वाजस्य मण्डले ॥ १०

अभूरेको रयिपते षट्सूक्तानि यथाक्रमम् ।
अपश्यन्नृषयो द्वे द्वे सन्त्यन्यत्र च तादृशाः ॥ ११

भ्रातॄणामपरो मध्य ऋषिः कश्चिन्न दृश्यते ।
त्रिशोकनाभाकमध्ये विरूपः कथमागतः ॥ १२

अग्निमस्तोष्यृग्मियन्नाभाकार्षं विदुर्बुधाः ।
एवमादीनि सूक्तानि विरूपस्तत आगतः ॥ १३

इमे विप्रस्य वेधसस्त्द्विरूपार्षमुच्यते ।
आ घा ये अग्निमिन्धते त्रैशोकं सूक्तमुच्यते ॥ १४

नाभाकश्च त्रिशोकश्च भ्रातराविति कोऽब्रवीत् ।
शाट्यायने श्रूयते हि त्रैशोकब्राह्मणे तथा ॥ १५

## अत्र शाट्यायनकम् ।

कण्वो वै नार्षदो बकस्यासुरस्य दुहितरमविन्दत । तस्यां हास्य त्रिशोकनाभाकौ पुत्रौ जज्ञाते । इति ॥

श्रूयताम्परिहारोऽत्र यो यजाति यजात इत् ।
इत्येवमादिकः कश्चिदनुवाकः स्मृतो बुधैः ॥ १६

अन्ते तस्यानुवाकस्य नाभाकः पर्यवस्थितः ।
उत्तरस्यानुवाकस्य विरूपो मुखतः स्थितः ॥ १७

इमे विप्रस्य वेधसः सूक्तमाग्नेयमुच्यते ।
आ घा ये अग्निमिन्धत ऐन्द्रन्त्रैशोकमुच्यते ॥ १८

मण्डलादिष्विवाग्नेयमैन्द्रात्प्राक्स्थापितम्बुधैः ।
अनुवाकान्तरत्वाच्च न भ्रातृत्वन्नियामकम् ॥ १९

अथायङ्क्रेन विन्यासः सर्वो दृष्टो महर्षिणा ।
सर्वस्यां संहितायां यः सर्वैरिति विपश्चितः ॥ २०

मण्डलान्यृषयो दृष्ट्वा सर्व एव समागताः ।
विन्यासन्ददृशुः पश्चादिति वृद्धेभ्य आगमः ॥ २१

कल्पनश्चानुवाकानामृषिदृष्टमितिस्थितिः ।
न ह्यनार्षमिदं युक्तं यद्दृष्टम्ब्राह्मणेष्विति ॥ २२

स्वादिष्ठया मदिष्ठया तासामध्ययने फलम् ।
प्रादर्शयद्वसिष्ठोऽन्ते यः पावमानीरध्येति ॥ २३

एवं सर्वैः प्रदृष्टानां सूक्तानाङ्क्रमदर्शनम् ।
युक्तमन्ते सङ्गतानामिति वृद्धेषु निर्णयः ॥ २४

तथैवान्येन दृष्टेषु मन्त्रेष्वन्ये महर्षयः ।
नानाविधानि सूक्तानि पश्यन्त्यपि च सङ्गताः ॥ २५

---

अचिन्त्यमद्भुतं वेदं साङ्गोपाङ्गमधीयते ।
अस्यागमं यथातत्त्वमृषिरेवावगच्छति ॥

ऋषिनामार्षगोत्रेषु पञ्चमेऽस्माभिरष्टके ।
अध्यायादिषु वक्तव्यं विभज्योक्तं क्रमादिति ॥

इति

---

# ऋग्वेदानुक्रमणी

VI

## छन्दोनुक्रमणी

(i)

अथ षष्ठोऽष्टकस्तस्मिन्नध्यायादिषु वक्ष्यते ।
यच्छन्दसीह वक्तव्यं विद्यते छान्दसैर्द्विजैः ॥

गायत्र्युष्णिगनुष्टुप्च बृहती पाङ्क्तिरेव च ।
त्रिष्टुब्जगत्यौ सप्तेति छन्दांसि कवयो विदुः ॥ १

ननु चातिजगत्यस्ति शक्वर्यप्यतिशक्वरी ।
तथैव चाष्टिरत्यष्टिर्धृतिश्चातिधृतिस्तथा ॥ २

सर्वाणि दृष्टानि च संहिताया-
न्तथैव चासंश्चतुरुत्तराणि ।
ततश्च वेदे वचनीयमित्थ-
मिमानि छन्दांसि चतुर्दशेति ॥ ३

ननु च त्रीणि छन्दांसि चत्वारीति च दृश्यते ।
आहुः प्रवादौ भाक्तौ तौ सप्तत्वश्चैव तादृशम् ॥ ४

भवन्ति छान्दसानीह पदानि त्रीणि तद्यथा ।
एकमष्टाक्षरन्दृष्टमेकमेकादशाक्षरम् ॥ ५

द्वादशाक्षरमप्येकन्तेन त्रीणीति भाषते ।
पदन्दशाक्षरञ्चाल्पं वैराजन्तदुपेक्षितम् ॥ ६

गायत्र्येवोष्णिगभवत्पङ्क्तिमल्पामुपेक्षते ।
अनुष्टुबेव बृहती तेन चत्वारि भाषते ॥ ७

तद्वच्छ्रूयांसि सप्तैव प्रधानान्यपि वा पुनः ।
कथ्यन्ते नामभिश्चैव गायत्री जगतीति च ॥ ८

निचृतो भुरिजश्चाहुस्ताश्चेदूनाधिकाक्षराः ।
द्वाभ्यां विराट्स्वराजौ च निचृदुष्णिग्भुरिक्ककुप् ॥ ९

अग्निः पूर्वेभिर्ऋषिभिर्गायत्री निचृदुच्यते ।
विद्वांसाविद्दुरः पृच्छेद्गायत्री सा भुरिक्स्मृता ॥ १०

विराजमाहू राजन्तमध्वराणामिमामृचम् ।
इन्द्र जुषस्व प्रवह सैषानुष्टुप्स्वराडिति ॥ ११

चत्वारः पञ्चकाः पादाष्षट्कश्चैको यदा भवेत् ।
गायत्री पदपङ्क्तिः सा अधा ह्यग्ने क्रतोरिति ॥ १२

चतुष्को वा चतुर्थः स्यात्तत्रोदाहरणन्त्विदम् ।
अग्ने तमद्याश्वमिति चतुष्को हि हृदिस्पृशम् ॥ १३

पदपङ्क्तिन्तु पठति पङ्क्तिष्वेव पतञ्जलिः ।
कात्यायनस्य गायत्री पदपङ्क्तिरिति स्थितिः ॥ १४

षट्सप्तैकादशाः पादा उष्णिग्गर्भेति तां विदुः ।
सा ता मे अश्व्यानामिति त्रयश्च यदि सप्तकाः ॥ १५

सा तु पादनिचृत्प्रोक्ता युवाकु हि शचीति सा ।
यदि सप्तकयोर्मध्ये षट्कः सातिनिचृत्स्मृता ॥ १६

सा पुरूतमम्पुरूणां स्तोतॄणामिति दृश्यते ।
यदि सप्तकयोर्मध्ये दशकः स्यात्प्रतिष्ठितः ॥ १७

यवमध्या सा भवति स सुन्वे यो वसूनाम् ।
षट्कसप्तकाष्टकाश्चेद्वर्धमानेति कीर्तिता ॥ १८

विपरीता प्रतिष्ठेति तत्रोदाहरणं शृणु ।
त्वमसि प्रशस्य इति त्वमग्ने व्रतपा असि ॥ १९

षट्कैश्चतुर्भिर्गायत्री पदैस्तु भवति क्वचित् ।
इन्द्रः शचीपतिरिति तत्राहुस्तन्निदर्शनम् ॥ २०

इति

——

ii

वयमु त्वामपूर्व्येति व्याचिख्यासति माधवः।
उष्णिगादिषु वक्तव्यमादावेव प्रदर्शयन् ॥

पादे द्वितीये ककुभोऽपि वृद्धि-
म्पुरोऽपि वृद्धिम्प्रवदन्ति युक्ताः।
छन्दस्तु तेनोष्णिगभूद्द्वितीया
तस्याष्टकौ द्वादशकश्च पादाः ॥ १

पादो यदा द्वादशकः पुरस्ता-
त्तदा भवेत्सा पुर उष्णिगाख्या ।
अभ्यन्तरेताम्प्रवदन्ति ताञ्च
ककुप्प सो अग्र इतीरितार्थैः ॥ २

पादो यदैकादशकः पुरस्ता-
न्मध्ये भवेज्जागतपाद एकः ।
सा स्यात्ककुम्न्यङ्कुशिरा तृतीयः
पादो भवेन्नूनमथेति तस्याः ॥ ३

पादौ यदैकादशिनौ पुरस्ता-
त्त्वया घोषे भृगवाणे न शोभे ।
षट्को भवेत्तस्य शिरस्तृतीयो
वदन्ति विप्रास्तनुशीर्षनाम्नीम् ॥ ४

हरी यस्य सुयुजा विव्रता वे-
रस्या मध्ये षट्कपादो निविष्टः ।
पिपीलिकापूर्वकमध्यशब्दं
समस्तमस्याः प्रवदन्ति संज्ञाम् ॥ ५

त्रयोऽष्टकाः पञ्चक आद्य एकः
सा पितुन्नु स्तोषमनुष्टुब्गर्भा ।
नदं व इत्युष्णिगियञ्चतुर्भिः
पदैरुपेताक्षरसप्तसङ्घैः ॥ ६

## अत्र शाट्यायनकम् ।

सा ककुबब्रवीत् बलिष्ठा वाहमस्मि। पराक्रममाणः खलु मेऽक्षराणि समौहीत् । पूर्वम्मा प्रयुञ्जताम् । इति । अथोष्णिगब्रवीत् । अथ माम्पूर्वमाचक्षन्ताम् । इति । तथेति तस्मिन्समपादयेताम् । पूर्वप्रयोगमन्यावृणीत । पूर्वाख्यानमन्याच । तस्मादेने एवम्प्रयुञ्जीत । तस्मादुष्णिक्ककुभावित्याख्यायेत । इति ॥

चतुष्पदानुष्टबथो यदा स्युः
पदानि पञ्चापि च पञ्चकानि ।
महापदाद्याम्प्रवदन्ति पङ्क्तिं
षष्ठश्च रोचत उपाके पदम् ॥ ७

कृतिराद्यौ जागतावष्टकोऽन्ते
मा कस्मै धातमभ्यमित्रिणे नः ।
स्यादष्टको मध्यमश्चेत्तदा स्या-
त्पर्यूषु प्रेति पिपीलिकमध्या ॥ ८



 

मध्ये भवेज्जागतपाद एकः
पूर्वोत्तरौ नवकौ चापि पादौ ।
सा काविराण्णाम भवेदनुष्टु-
प्सैषा ता विद्वांसा हवामहे वाम् ॥ ९

नववैराजस्त्रयोदशैर्युता-
न्तान्नष्टरूपाङ्कवयो वदन्ति ।
वि पृच्छामि पाक्या न देवा-
न्पादैर्विराट्स्यादशकैस्त्रिभिश्च ॥ १०

इयम्पिबा सोममितीरितार्यै-
र्यद्वा स्युरेकादशकास्त्रयोऽपि ।
अग्निन्नरो दीधितिररण्यो-
र्दुहीयान्मित्रधितये युवाकु ॥ ११

इति

—

iii

## प्र कृतान्यृजीषिणो व्याचिख्यासति माधवः।
## प्रदर्शयन्बृहत्यादेर्लक्षणानि पृथक्पृथक् ॥

पदैः समेता बृहती चतुर्भि-
त्रयोऽष्टका द्वादशकस्तृतीयः।
सा स्यादभित्वेति रथन्तराद्या
सोक्ता निदानेऽपि च स्कन्धोग्रीवी ॥ १

यस्या भवेद्द्वादशकः पुरस्ता-
त्सोक्ता पुरस्ताद्बृहतीति विप्रैः।
महो यस्पतिः शवसो असाम्या
तस्मिन्द्वितीये बहुधा प्रवादः ॥ २

पिङ्गलस्य मते सा स्यान्महर्षेर्न्यङ्कुसारिणी।
स्कन्धोग्रीवी कौष्टुतेस्तु यास्कस्योरोबृहत्यपि ॥ ३

सा मत्स्यपायि ते महरन्त्यो द्वादशको यदि।
उपरिष्टाद्बृहत्येषा न तमंहश्च तादृशी ॥ ४

यद्यष्टाक्षरयोर्मध्ये पादौ स्यातान्दशाक्षरौ।
सा स्याद्विष्टारबृहती युवं द्यास्तम्महो इति ॥ ५

त्रयो द्वादशका यस्यास्तामूर्ध्वबृहतीं विदुः।
अजीजनो अमृत सा प्रत्नम्पीयूषमित्यपि ॥ ६

यदि त्वष्टाक्षरो मध्ये त्रयोदशकयोर्भवेत्।
सा पिपीलिकमध्या स्यादभि वो वीरमन्धसः ॥ ७

सनितः सुसनितरुग्र नवाष्टैकादशाष्टकाः ।
बृहत्येषा तु विषमपदेति कवयो विदुः ॥ ८

तन्त्वा वयम्पितो सैषा चतुर्भिर्नवकैर्युता ।
बृहत्येवेति कथिता बृहत्यो नव बह्वृचैः ॥ ९

भवन्ति पाङ्क्तानि पदानि पञ्च
तामाहुरिन्द्रो मदाय वावृधे ।
पादैश्चतुर्भिर्दशकैर्विराट्स्या-
दृतस्य पथि वेधा अपायि ॥ १०

आद्यम्पदन्द्वादशकन्तृतीय-
मथाष्टकौ द्वौ भवतश्च पादौ ।
सतोबृहत्याख्यमिदं वदन्ति
न त्वावानन्यो दिव्यो न पार्थिवः ॥ ११

विपर्यये सा विपरीतनाम्नी
तत्राष्टकावाद्यतृतीयपादौ ।
तामाहुर्य ऋष्वः श्रावयत्सखा
प्रस्तारपङ्क्तेरथ पादक्लृप्तिः ॥ १२

आद्यौ पादौ जागतावष्टकौ च
उच्छ्वंश्चस्व पृथिवि मा निबाधथाः ।
आस्तारपङ्क्तिर्विपरीतपादा
अग्निन्नसूक्तकङ्कथयन्ति सर्वम् ॥ १३

आद्यान्तौ चेज्जागतौ सम्प्रदिष्टा
संस्तारपङ्क्तिः कविभिः पुराणैः ।
निदर्शनम्पितुभृतो न तन्तु-
मित्तु प्रदिष्टमिह शौनकेन ॥ १४

आम्नायते च द्विपदासु सेय-
मधीयते च द्विपदैव विप्रैः ।
संस्तारपङ्क्तिश्च भवेत्समस्ता
विष्टारपङ्क्तेरथ पादक्लृप्तिः ॥ १५

आनुष्टुभौ द्वादशकौ च मध्ये
सा चेयमग्ने तव श्रवो वयम् ।
विष्टारपङ्क्तिश्च निदानकारो
विष्टब्धावेतौ पङ्क्तिपादाविति ॥ १६

इति

---

iv

# त्वावतः पुरूवसो व्याचिख्यासति माधवः।
# प्रदर्शयंस्त्रिष्टुभादेर्लक्षणानि पृथक्पृथक् ॥

स्यात्त्रिष्टुबेकादशकैश्चतुर्भिः
कस्य नूनङ्कतमस्यामृतानाम् ।
पदे यदि द्वे भवतस्तु जागते
वदन्ति सूक्तेन तदा व्यवस्थाम् ॥ १

यस्मै त्वमा यजसे स साधति
ये वाजिनम्परिपश्यन्ति पक्वम् ।
पूर्वानयोर्जागतसूक्तनिष्ठा
ततश्च सा जगती त्रिष्टुबन्या ॥ २

वैराजौ जागतौ चोभौ तां विद्यादभिसारिणीम् ।
यो वाचा विवाच इति तत्रोदाहरणं विदुः ॥ ३

नवकौ दशकश्चैकश्चतुर्थस्त्रैष्टुभस्तथा ।
सा स्यात्त्रिष्टुब्विराट्स्थाना स्वस्ति न इन्द्रो वृद्धश्रवाः ॥ ४

अपि वा दशकौ स्यातान्नवकस्त्रैष्टुभस्तथा ।
विराट्स्थानैव सा श्रुधी हवमिन्द्र मा रिषण्यः ॥ ५

पादा यदैकादशिनस्त्रयः स्यु-
स्तुभ्यं श्चोतन्त्यध्रिगो शचीवः ।
पादश्चतुर्थश्च तथाष्टकः स्या-
द्विराड्रूपान्ताङ्कथयन्ति सन्तः ॥ ६

त्रयो यदि द्वादशिनोऽष्टकोऽन्त्यो
ज्योतिष्मतीन्ताङ्कवयो वदन्ति ।
तज्ज्योतिषश्चापि यतोऽष्टकः स्या-
त्पुरस्ताज्ज्योतिर्मध्येज्योतिरिति ॥ ७

इमे त इन्द्र ते वयं ये त्वा रभ्य चरामसि ।
इत्यध्ययनमेकेषाम्मुख्यः पादस्तदाष्टकः ॥ ८

अस्माकन्तु जगत्येषा पुरुष्टुतपदान्विता ।
यद्वा यज्ञम्मनव इति मध्येज्योतिरुदाहृता ॥ ९

तृतीयेनापि पादेन मध्येज्योतिरियम्भवेत् ।
तदश्विना भिषजेति सा ज्ञेयाध्वर्युवेदतः ॥ १०

उपरिष्टाज्ज्योतिरियमग्निनेन्द्रेण कीर्तिता ।
पादोऽष्टकश्चतुर्थोऽस्याः सोमम्पिबतमश्विना ॥ ११

पदानि चत्वारि यदाष्टकानि
महाबृहत्युक्तिमियं लभेत ।
आद्यम्पदन्द्वादशकश्च तस्या
नमोवाके प्रस्थिते अध्वरे नराः ॥ १२

मुख्यावष्टाक्षरौ यस्यास्तृतीयो द्वादशाक्षरः ।
पुनर्द्वावष्टकौ स्यातां यवमध्येति तां विदुः ॥ १३

सा सम्मा तपन्त्यभितः सपत्नीरिव पर्शवः ।
अथाद्यौ दशकौ पादावष्टकाश्च ततस्त्रयः ॥ १४

पङ्क्त्युत्तरेति तामाहुर्विराट्पूर्वामथापरे ।
एवेन्द्राग्निभ्यामहावि त्रिष्टुभो दश कीर्तिताः ॥ १५

चत्वारो द्वादशाः पादा यदि स्युर्जगती भवेत् ।
जनस्य गोपा अजनिष्टेमं स्तोममिमे यथा ॥ १६

अष्टाक्षरास्त्रयः पादा द्वौ च द्वादशकौ यदा ।
महासतोबृहत्युक्ता यः पप्रौ भानुनेति सा ॥ १७

अष्टकौ सप्तकः षट्को दशको नवकस्तथा ।
सूर्ये विषमा सजामि महापङ्क्तिं वदन्ति ताम् ॥ १८

षट्स्वष्टकेष्वपि तथा अव द्वके अव त्रिका ।
उभे यदिन्द्र रोदसी जगत्यस्तिस्र ईरिताः ॥ १९

इति

—

( v )

## आ त्वा रथं यथोतये व्याचिख्यासति माधवः।
## अतिच्छन्दस्सु वक्तव्यान्द्विपदासु च दर्शयन् ॥

त्रयः पादा जागताः स्युरष्टकौ च तथापरौ ।
आहुस्तामतिजगतीं सा प्र वो महे मतयः ॥ १

पदानि सप्त शक्वर्याः सा प्रो ष्वस्मै पुरोरथम् ।
पदानि तत्राष्टकानि शृणुताप्यतिशक्वरीम् ॥ २

पदे षोडशके पूर्वे जागतश्च तथाष्टके ।
साकञ्जातः क्रतुनेति पदैः पञ्चभिरन्विता ॥ ३

अष्टेस्त्रयः षोडशका अष्टकौ च तथोत्तरौ ।
त्रिकद्रुकेषु महिष इत्यष्टिङ्कवयो विदुः ॥ ४

अग्निं होतारमत्यष्टिर्जागतावष्टकास्त्रयः ।
जागतश्चाष्टकश्चाथ सप्त पादा भवन्ति ते ॥ ५

अवर्मह इन्द्र धृतिर्जागतावष्टकास्त्रयः ।
षोडशोऽथाष्टकश्चान्त्यः सप्त पादाः प्रकीर्तिताः ॥ ६

सप्तैवातिधृतेः पादाः स हि शर्धो न मारुतम् ।
द्वादशकषोडशकावष्टका जागतोऽष्टकः ॥ ७

चतुर्दशेत्यष्टविभिः पुराणै-
श्छन्दांसि दृष्टानि समीरितानि ।
इयन्ति दृष्टानि तु संहिताया-
मन्यानि वेदेष्वपरेषु सन्ति ॥ ८



6

चतुरधिकच्छन्दांसि दर्शितानि चतुर्दश ।
यानि दशतयीष्वासन्नुत्तराणि सुभेषजे ॥ ९.

कृतिः प्रकृतिराकृतिर्विकृतिः सङ्कृतिस्तथा ।
षष्ठी चाभिकृतिर्नाम सप्तम्युत्कृतिरुच्यते ॥ १०

अशीतिश्चतुरशीतिरष्टाशीतिर्द्विनवतिः ।
षण्णवतिः शतम्पूर्णमुत्तमन्तु चतुःशतम् ॥ ११

प्रातिशाख्ये निदाने च मा प्रमा प्रतिमेति च ।
नानाविधानि छन्दांसि लक्षितानि च लक्षणैः ॥ १२

उक्तानाञ्छन्दसां सन्ति द्विपदैकपदा अपि ।
त्रिष्टुब्जगत्योर्गायत्र्याः पङ्क्त्या याभूच्चतुष्पदा ॥ १३

एकः पाद एकपदा द्वौ पादौ द्विपदोच्यते ।
प्रोच्यते तेन तेनैव सरूपा यस्य पादतः ॥ १४

न दाशतय्येकपदा काचिद्यास्कस्य विद्यते ।
भद्रन्नो अपि वातय सा स्यादेकपदा विराट् ॥ १५

इन्द्रो विश्वस्य गोपतिरिन्द्रो विश्वस्य भूपतिः ।
एताश्चतस्रो गायत्रीराहुरेकपदा इति ॥ १६

पवस्व सोम मन्दयन्निन्द्राय मधुमत्तमः ।
इति तिस्रः समाख्याता गायत्र्यो द्विपदा इति ॥ १७

आ वां सुम्ने वरिमन्सा त्रिष्टुबेकपदोच्यते ।
महि राधो विश्वजन्यं त्रैष्टुभान्द्विपदां विदुः ॥ १८

अग्नेभवस्तुषमिद्धास्सूक्तं सर्वश्च तादृशम् ।
सनोवाजेषुपादौ द्वौ जागतीन्द्विपदां विदुः ॥ १९

उरौ देवा अनिबाधे सिषक्तु न ऊर्जव्यस्य ।
द्वे विराजावेकपदे तथासिक्न्यां यजमानो न होता ॥ २०

इति

---

(vi)

## आ प्र द्रव परावतो व्याचिख्यासति माधवः ।
## प्रगाथेषु च वक्तव्यं सम्पत्तिञ्च प्रदर्शयन् ॥

बार्हतो बृहतीपूर्वः ककुप्पूर्वस्तु काकुभः ।
एतौ सतोबृहत्यन्तौ प्रगाथौ भवतो द्वृचौ ॥ १

त्वमङ्ग प्र प्र वो यद्दम्माचिद्धहदु गायिषे ।
बार्हतान्काकुभानाहुस्तञ्चूर्धय वयम्वित ॥ २

चतुर्थषष्ठावभ्यस्येत्प्रगाथे बार्हते सति ।
बृहत्युभे च ककुभौ सम्पद्यन्ते तथा सति ॥ ३

द्वे तिस्रकारं शंसेत बृहतीकारमिच्छता ।
तयोरेव द्विरभ्यासः कार्य इत्याश्वलायनः ॥ ४

तृतीयपञ्चमौ पादावभ्यस्येत्काकुभे बुधः ।
ऋचौ द्वे ककुभस्तिस्रः सम्पद्यन्ते तथा सति ॥ ५

महासतोबृहत्यन्तो यो महाबृहतीपुरः ।
स महाबार्हतो नाम बृहद्भिरग्ने अर्चिभिः ॥ ६

महाबार्हतप्रगाथे चतुर्थं सप्तमन्तथा ।
अभ्यस्येते बृहत्यः स्युस्तिस्रस्ता इति पण्डिताः ॥ ७

सन्ति प्रगाथा बहवः प्रातिशाख्यप्रदर्शिताः ।
पातञ्जले निदाने तु द्वौ प्रगाथौ प्रदर्शितौ ॥ ८

प्रगाथो यवमध्यान्तो वामी वामस्य धूतयः ।
बृहत्यौ मुखतस्तस्य गायत्रीत्वन्ततो भवेत् ॥ ९

अनुष्टुब्द्वे च गायत्र्यावयमानुष्टुभः स्मृतः ।
आ त्वा रथं यथोतय इति तत्र निदर्शनम् ॥ १०

## अत्र निदानम् ।

यस्य कस्यचिच्छन्दसः सम्पदङ्काङ्क्षेदिच्छति ।
चतुर्थन्तस्य सङ्ख्याय तावतीराहरेदृचः ॥

यद्युत छन्द आहरेदन्यदन्यस्य सम्पदे ।
चतुर्थन्तस्य सङ्ख्याय विद्यात्तास्तावतीर्ऋचः ॥ इति ॥

तदिदन्तिस्रोऽनुष्टुभश्चतस्र गायत्र्य इत्यादि ब्राह्मणानां समर्थनम् ॥

तत्र गायत्रीभिः शस्ताभिर्जगतीः सम्पादयितुमिच्छञ्जगत्याश्चतुर्थङ्गणये-दूद्वादश भवन्ति । ततो द्वादश गायत्रीः शंसेत् । यदिदञ्जगतीसम्पादनार्थ-माहृतञ्छन्दो गायत्रन्तस्य यच्चतुर्थन्तत्पश्येत् । षड्भवन्ति । एवञ्च द्वादश गायत्र्यः षड्जगत्यो भवन्ति ॥

गायत्रीभिस्त्रिष्टुभः सम्पादयितुमिच्छन्नेकादश गायत्रीराहरेत् । षट्त्रिष्टुभो भवन्ति ॥

गायत्रीभिः पङ्क्तीः सम्पादयितुमिच्छन्दश गायत्रीराहरेत् । षट्पङ्क्तयो भवन्ति ॥

अथोष्णिग्भिर्जगतीः सम्पादयितुमिच्छन्द्वादशोष्णिह आहरेत् । सप्त जगत्यो भवन्ति ॥

उष्णिग्भिस्त्रिष्टुभः सम्पादयितुमिच्छन्नेकादशोष्णिह आहरेत्। सप्त त्रिष्टुभो भवन्ति ॥

गायत्रीभिरुष्णिहः सम्पादयितुमिच्छन्सप्त गायत्रीराहरेत् । षडुष्णिहो भवन्ति ॥

उष्णिग्भिर्गायत्रीः सम्पादयितुमिच्छन्षडुष्णिह आहरेत् । सप्त गायत्र्यो भवन्ति ॥

एवं सर्वत्र द्रष्टव्यम् ॥

इति

---

( vii )

**इन्द्राय साम गायत व्याचिख्यासति माधवः ।**
**पादेषूनेषु वक्तव्यमादितः सम्प्रदर्शयन् ॥**

व्यूहेदेकाक्षरीभावान्पादेषूनेषु सम्पदे ।
क्षैप्रवर्णांश्च संयोगान्व्यवेयात्सदृशैः स्वरैः ॥ १

व्यूहेदेकारमृचस्याम्मेता जयता नरेति ।
मिता इव स्वरवोऽस्यामोकारं व्यूहते तथा ॥ २

इकः स्थाने प्रविष्टानां यणां संज्ञेयमिष्यते ।
यामाहुः क्षैप्रवर्णेति तेषाञ्च व्यूह इष्यते ॥ ३

अग्ने चिकिद्धि अस्य नो द्रुअन्नः सर्पिरासुतिः ।
सन्धीनेवंविधान्व्यूहेत्सम्पदर्थमिति स्थितिः ॥ ४

यस्येति लोपलुप्तश्च पुनरानीयते तथा ।
मर्तो वुरीत सखियमिति तत्र निदर्शनम् ॥ ५

समीचीना यदा वृत्तिर्न व्यूहेऽपि भवेदिह ।
न तदा व्यूहमिच्छन्ति तत्रैतल्लिङ्गदर्शनम् ॥ ६

विश्वो देवस्य नेतुरित्यस्यामृचि श्रूयते ।
सप्ताक्षरम्प्रथमपदमष्टाक्षराणि त्रीणि ॥ ७

न तु सन्धिनिमित्तोऽयं वकारो विश्वगोचरः ।
अनुक्तस्तस्य च व्यूहो यस्माद्व्यूहेऽपि नाक्षरम् ॥ ८

अक्षरे पादक्लृप्तिः स्यान्न च हल्केवलोऽक्षरम् ।
संयोगानामतो व्यूहो न कार्य इति बह्वृचाः ॥ ९

भवतो द्वौ यणादेशौ यदैकस्मिन्पदे तदा ।
तथा व्यूहेद्यणादेशं यथा वृत्तिर्न दुष्यति ॥ १०

व्यूहे च वृत्त्यसिद्धिश्चेद्व्यूहन्नेच्छन्ति केचन ।
व्यूहेनाक्षरसङ्ख्या च कार्यैवेत्याह माधवः ॥ ११

## तदिमौ श्लोकौ भवतः ।

चत्वारि सन्धिजातानि यैश्छन्दो ह्रसते न च ।
प्रश्लिष्टमभिनिहतं क्षिप्रसन्धिरभिद्रुतम् ॥

एतानि सन्धिजातानि मिमानश्छन्दसोऽक्षरैः ।
द्वैधङ्कुर्यादसम्पूर्णे न पूर्णे किञ्चनेङ्गयेत् ॥ इति ॥

गुणो वृद्धिश्च दीर्घश्च प्रश्लिष्टाः सन्धयः स्मृताः ।
एङः पदान्तादतीति सन्तोऽभिनिहितं विदुः ॥ १२

प्रयोगोऽर्थो वृत्तिरेते पदज्ञानस्य हेतवः ।
बलीयः स्याद्विरोधे च पूर्वम्पूर्वमिति स्थितिः ॥ १३

इति

——

( viii )

## सोमः पुनानो अर्षति व्याचिख्यासति माधवः । अवसानेषु वक्तव्यमादितः सम्प्रदर्शयन् ॥

तत्रर्चामवसानानि प्रायेणार्थानुरूपतः ।
अवस्येदन्ततस्तत्र द्विपदैकपदा ऋचः ॥ १

अर्धर्चेऽवान्तरः कश्चिद्वाक्यार्थः पर्यवस्यति ।
बह्वीष्वृक्षु विशेषन्तत्र विजानन्त्यपण्डिताः ॥ २

पदयोर्मुख्ययोः पङ्क्त्यामेकोऽर्थः पर्यवस्थितः ।
त्रिषु चान्यस्ततस्तासु द्वावुक्त्वा त्रीनथो वदेत् ॥ ३

यत्रान्यथावसानं स्यात्तत्रार्थोऽपि च तादृशः ।
पुर उष्णिक्षु सर्वासु पादो मुख्यस्तथाविधः ॥ ४

भरद्वाजायाव धुक्षत द्विता इतेरिव तेऽवृकमस्तु सख्यम् ।
तच्चक्षुर्देवहितं शुक्रमुच्चरद्वृक्षाश्चिन्मे अभिपित्वे अरारणुः ॥ ५

मध्येऽवसानन्तु चतुष्पदासु
त्रिभिः समस्तैरपरैः परैर्वा ।
एतं शंसन्त्रिभिराद्यैः पदैः स्या-
दधीन्न्वत्र त्रिभिरेवापरैश्च ॥ ६

इन्द्रो मदाय वावृधे नकिष्टङ्कर्मणा नशत् ।
अवस्येत्पादयोरत्र मुख्ययोः क्वचिदन्यथा ॥ ७

नकिर्देवा मिनीमसि त्रिषु पादेष्ववस्यति ।
षट्पदायाश्च मध्ये स्याद्द्वयोर्वा पर्यवस्यति ॥ ८



7

स क्षपः परिषस्वजे निष्कं वा घा कृणवते ।
निदर्शनमृचौ तत्र दर्शयामास शौनकः ॥ ९

सुष्वमा यातमद्रिभिर्नहि वां वत्रयामहे ।
प्रो ष्वस्मै पुरोरथमिति सप्तपदा इमाः ॥ १०

एषु मन्त्रेष्ववस्यन्ति द्वाभ्यान्द्वाभ्यान्ततः परम् ।
पादेषु त्रिष्ववस्थानश्चतुर्ष्वपि च कुर्वते ॥ ११

ऋच्यस्याञ्छान्दसा विप्रा नहि वां वत्रयामहे ।
द्वयोः पञ्चसु वावस्येत्सा प्रो ष्वस्मै पुरोरथम् ॥ १२

स हि शर्धो न मारुतन्त्रिषु पूर्वमवस्यति ।
द्वावुक्त्वा त्रीनथो ब्रूयादष्टौ पादा भवन्ति ते ॥ १३

पादे पादे समाप्यन्ते प्रायेणार्था अवान्तराः ।
विरोधेऽक्षरतः पाद इमम्मे वरुण श्रुधि ॥ १४

श्रुधीमं हवं वरुण पादे मुख्ये समन्वयः ।
हवमित्यस्य पादान्तः श्रुधीत्यत्रेति शौनकः ॥ १५

अग्निमीळे पुरोहितं यज्ञस्येत्यर्थसंस्थितिः ।
यदा तदोदाहरणन्त्वेदश्च प्रदर्शयेत् ॥ १६

यदि यज्ञस्य देवोऽग्निरिति तत्रार्थ इष्यते ।
प्रतिपादमर्थभेदात्तदा नैषा निदर्शनम् ॥ १७

अथाप्यर्थः स्वभावेन न पादेषु व्यवस्यति ।
ऋतेन मित्रावरुणौ विद्यात्तत्र निदर्शनम् ॥ १८

सम्बोधनाद्युदात्तत्वमिह प्राप्तं दृश्यते ।
ऋताद्यधपदे तस्मादविरामः प्रतीयते ॥ १९

इदमत्रावगन्तव्यमवधानविवर्जितः ।
यावन्ति शक्नुयाद्वक्तुमप्राणन्नेव मानवः ॥ २०

तावद्भिरक्षरैरर्थः प्रायेण प्रतिपाद्यते ।
गायत्र्यादिजगत्यन्तमप्राणन्नेव भाषते ॥ २१

अथाप्यतिजगत्यादिमुच्चारयति मानवः ।
अवधानपरोऽप्राणन्सप्तकश्चतुरुत्तरम् ॥ २२

महता प्रणिधानेन यत्नेन महतापि च ।
उत्तमं सप्तकम्प्राहुरुत्कृत्यन्तामिति स्थितिः ॥ २३

लौकिकार्थस्वभावेन सप्तकानां यथाक्रमम् ।
वैदे भूयान्प्रयोगोऽभूदल्पोऽथाल्पतरोऽपि च ॥ २४

---

इति छन्दस्सु वक्तव्यमध्यायादिषु दर्शितम् ।
अस्माभिरष्टके षष्ठे जानन्नेतद्विमुच्यते ॥

इति

——

# ऋग्वेदानुक्रमणी

VII

## देवतानुक्रमणी

(i)

सप्तमोऽथाष्टकस्तस्मिन्नध्यायादिषु वक्ष्यते ।
यत्किञ्चिदिह वक्तव्यन्देवतास्वस्ति बह्वृचैः ॥

तपोविशेषयुक्तानां युगेष्वन्येषु देवताः ।
आसन्नृषीणाम्प्रत्यक्षाः प्रभावैर्विविधैर्युताः ॥ १

आगोपालं विप्रथिताम्प्रशस्तिमिह लौकिकीम् ।
देवतास्तित्वविषयान्तन्मूलाङ्कवयो विदुः ॥ २

मन्त्रार्थवादैर्ननु च देवताः सम्प्रदर्शिताः ।
सेयम्प्रसिद्धिस्तन्मूला केचन स्वार्थतत्पराः ॥ ३

अत्र ब्रूमोऽविगीतेयमतर्कज्ञेषु दृश्यते ।
ततः प्रत्यक्षमूलेऽयं यद्वा मन्त्रार्थतत्पराः ॥ ४

यथाशब्दमिह प्रीताश्चेतनाः केचिदीश्वराः ।
ददत्यभिमतानर्थानिति वक्तुञ्च युज्यते ॥ ५

किञ्च वैदिकवाक्यानि सदृशानीह लौकिकैः ।
तेषु स्तुतिश्च सत्यश्च स्वरूपादवगम्यते ॥ ६

कन्याकुब्जे देवदत्तमुदारन्दृष्टवानहम् ।
धनं याचस्व तम्पुत्र वचः सत्यमिदम्मतम् ॥ ७

प्रयच्छति स सर्वेभ्यः प्रतीक्ष्यास्ते च भिक्षुकान् ।
न च क्रुध्यति कस्मैचिदिति श्रद्धापनम्भवेत् ॥ ८

एवम्मन्त्रार्थवादेषु सन्ति सत्यानि कानिचित् ।
भाक्तानि कानिचित्सन्ति तानि जानन्ति पण्डिताः ॥ ९

किञ्चात्यन्तमसत्यैश्च यदि श्रद्धापयेदिह ।
अपौरुषेयतादीनि मृगयन्ते न पण्डिताः ॥ १०

कन्याकुब्जे देवदत्तः कनकं सम्प्रयच्छति ।
जनयामास यं वन्ध्या सोऽनाप्तो वचनाद्भवेत् ॥ ११

धर्मस्य देवतानाञ्च व्यासेन द्रौपदीमते ।
अस्तित्वं हेतुभिः प्रोक्तन्नेमोऽद्राक्षीच्छचीपतिम् ॥ १२

नेन्द्रो अस्तीति नेमेन कुपिते स्वयमागतः ।
अयमस्मीत्युवाचेन्द्रो वसिष्ठश्च ददर्श तम् ॥ १३

किञ्चैके ददृशुर्मन्त्रान्कया शुभा सवयसा ।
एना वयम्पयसेति पश्यामस्तत्परार्थकम् ॥ १४

तार्किकेष्वपि चेच्छन्ति केचिन्मन्त्रार्थवादयोः ।
परार्थेऽपि यथार्थत्वम्पुराणानि ततोऽभवन् ॥ १५

यजुषामिव पारार्थ्यमृचामपि च नेष्यते ।
नानाविधैरभिप्रायैर्ऋचो दृष्टा महर्षिभिः ॥ १६

यदा पश्यन्त्यृचः सर्वा न तदा हेतुमिच्छति ।
बुद्धिमान्देवतास्तित्वे सूर्यश्चोदेति सर्वदा ॥ १७

इति

( ii )

हिन्वन्ति सूरमध्यायं व्याचिख्यासति माधवः।
तत्र प्रत्यक्षदेवेषु वक्तव्यं सम्प्रदर्श्यते॥

प्रत्यक्षाश्च परोक्षाश्च द्विविधास्तत्र देवताः।
तत्प्रवादैर्विजानीमो द्वैविध्यमिह वैदिकैः॥ १

अग्निर्वायुश्च सूर्यश्च मरुतः पृथिवी तथा।
आपो रात्रिरुषा गावः प्रत्यक्षैः कर्मभिस्तु ताः॥ २

स्तूयन्ते चापरोक्षैश्च श्रुत्कर्णं सप्रथस्तमम्।
अग्निर्होता कविक्रतुर्वायो तव प्रपृञ्चती॥ ३

सरस्वती च मन्युश्च सोम ओषधयः पितुः।
अपरोक्षैः स्तुताः कार्यैः परोक्षाश्च भवन्ति ते॥ ४

तत्र प्रत्यक्षकार्याणां सर्वथा सम्भवे सति।
परोक्षेष्ववगन्तव्यमग्न्यादिष्विति निश्चयः॥ ५

के ष्ठा नरः श्रेष्ठतमाः सूक्तेऽस्मिन्बहवो गुणाः।
परोक्षा मरुतामुक्ताः प्रत्यक्षा बहुशः स्तुताः॥ ६

प्रत्यक्षाश्च परोक्षाणाम्महिमान इति स्थिते।
तेषु ते सन्ति दधाति भवन्त्यापि च तन्मयाः॥ ७

देवतातत्त्वविज्ञानम्महता तपसा भवेत्।
शक्यते किन्तदस्माभिर्याथातथ्येन भाषितुम्॥ ८

इति

(iii)

## धर्ता दिवः पवते व्याचिख्यासति माधवः ।
## अश्रूयमाणदेवेषु वाच्यम्मन्त्रेषु दर्शयन् ॥

ऋषिर्यस्य गुणान्ब्रूते यस्माच्चार्थमभीप्सते ।
निवेशयति यन्नाम तामाहुस्तस्य देवताम् ॥ १

अग्निमीळे पुरोहितं वायवायाहि दर्शत ।
इन्द्रमिद्गाथिनो बृहत्सूर्य आत्मेति ता ऋचः ॥ २

श्रुतेऽपि नाम्न्यतात्पर्ये न सा भवति देवता ।
दानस्तुतिषु दृष्टानि नामान्यत्र निदर्शनम् ॥ ३

अर्हन्नग्ने पैजवनस्य दान-
म्भद्रमिदं रुशमा अग्ने अक्रन् ।
आसङ्गो अग्ने दशभिः सहस्रै-
र्बृहदस्मै वय इन्द्रो दधाति ॥ ४

आ पुत्रा अग्न इत्यत्र तथाग्निः सम्प्रकीर्तितः ।
मण्डले पावमाने तु बहवः कीर्तितास्तथा ॥ ५

अदृष्टे नाम्नि सूक्तेन देवताया विनिश्चयः ।
सुरूपकृत्नुमित्याद्या ऋचस्तत्र निदर्शनम् ॥ ६

यद्यन्यदैवते सूक्ते देवतानाम पश्यति ।
निर्ब्रूयात्प्रकृतायान्तत्तावश्विना भद्रहस्ता ॥ ७

वैश्वदेवेषु सूक्तेषु देवतान्देवतागुणैः ।
प्रातिस्विकेषु सूक्तेषु दृष्टैर्जानन्ति पण्डिताः ॥ ८

वभ्रुरेको वदत्याद्या सौम्याग्नेयी तदुत्तरा ।
त्वाष्ट्री चैन्द्री च रौद्री च पौष्णी वैष्णव्यृगाश्विनी ॥ ९

नवमी मैत्रावरुण्यृग्दशमी चातिसंस्तवः ।
सर्वासु देवतानाम द्विपदासु न दृश्यते ॥ १०

यथा ब्राह्मणवाक्यानान्नास्ति काचन देवता ।
तथैव नास्ति केषाञ्चिच्चतुरश्चिददमानात् ॥ ११

अध स्वप्नस्य निर्विदे कृषन्नित्फाल आशितम् ।
दुरुक्तनिन्दा क्रियते चतुरश्चित्प्रसङ्गतः ॥ १२

अध स्वप्नस्य निर्विदे कदर्यो निन्द्यतेऽनया ।
कृषन्नित्फाल आशितन्दानमेषा प्रशंसति ॥ १३

अभ्यवस्थाः प्र जायन्ते सूक्तमाग्नेयमुच्यते ।
तत्राद्याभिश्चतसृभिर्जरात्मीया प्रदर्शिता ॥ १४

अन्त्ययाग्निः श्मशानस्थः कीळन्नो रश्म आ भुवः ।
आग्नेयत्वन्तु सूक्तस्य मनस्यग्नेः समागमात् ॥ १५

जीर्णो वव्रिः श्मशानेऽग्निर्धक्ष्यतीति भयान्वितः ।
प्रदर्शयत्यवस्थान्तान्तुष्टावाग्निन्तथान्त्यया ॥ १६

शासद्वह्निरिदं सूक्तमैन्द्रन्तत्र प्रसङ्गतः ।
स्मार्तोऽर्थः कथ्यते कश्चिदृग्भ्यान्द्वाभ्याम्महर्षिणा ॥ १७

करोति पुत्रिकान्नारीं यथा दुहितरन्तथा ।
तस्यां सिञ्चति रेतश्च तच्छासदिति कीर्तितम् ॥ १८

रिक्तस्य दुहितुर्दानन्नेत्यृचि प्रतिषिध्यते ।
तस्याश्चैव यवीयांसम्भ्रातरञ्ज्येष्ठवत्स्तुतम् ॥ १९

इन्द्रापर्वता बृहता सूक्तमैन्द्रमिदं विदुः ।
तत्रानुशास्ति कुशिकानुप प्रेतेति कौशिकः ॥ २०

विश्वामित्रो ददर्शास्मिन्सूक्ते नानाविधा ऋचः ।
नानाविधैरभिप्रायैः सन्ति यासु न देवताः ॥ २१

वदन्ति चात्मकर्माणि प्राता रत्नं प्रातरित्वा ।
नाहमतो निरयेति तादृशाः सन्ति चापराः ॥ २२

शौनकस्तत्र वदति सूक्ते यस्मिन्नृचः स्थिताः ।
देवतामाश्रयन्ते ताः स्तुतां सूक्तेन तामिति ॥ २३

इति

---

( iv )

**असर्जि वक्वा रथ्येति व्याचिख्यासति माधवः ।**
**अश्वाद्यौषधिपर्यन्ते वाच्यन्देवगणे वदन् ॥**

---

अश्वाकृतिर्दधिक्रावा दिवि देवोऽस्ति कश्चन ।
ततोऽश्वाः प्रादुरभवंस्तत्त्वमारोप्य ते स्तुताः ॥ १

ऋषेर्गृत्समदस्याग्र आसीदिन्द्रः कपिञ्जलः ।
तुष्टाव तमृषिर्ज्ञात्वा स सूक्ताभ्याङ्कनिक्रदत् ॥ २

मण्डूकानामथाक्षाणां सन्ति ग्राव्णश्च देवताः ।
यो वः सेनानीर्महतः प्र वो ग्रावाणः सविता ॥ ३

स्तूयन्तेऽचेतनाः केचिदिह देवैरधिष्ठिताः ।
शकुनिर्द्रुघणश्चेति तत्र विद्धि निदर्शनम् ॥ ४

स्तूयन्ते यज्ञसंयोगादपि चान्ये रथादयः ।
अथापि युद्धसंयोगाद्रथादीनां स्तुतिर्भवेत् ॥ ५

अहावनदता हते ओषधयः सं वदन्ते ।
इत्यपामोषधीनाञ्च देवताः सम्प्रदर्शिताः ॥ ६

अग्न्यादयः सन्निहिताः सर्वदा लौकिकेष्वपि ।
यमेन यम्याः संवादे सोऽयमर्थ उदीरितः ॥ ७

न सर्वे चेतना देवा नापि सर्व अचेतनाः ।
इति वादैर्विजानीमो मन्त्रब्राह्मणगोचरैः ॥ ८

इतिहासपुराणैर्ये देवतात्वेन दर्शिताः ।
तानाहुश्चेतनान्देवान्भवन्त्यन्ये त्वचेतनाः ॥ ९

# अत्र वाजसनेयकम् ।

न वा अत्र देवतास्त्यनुयाजेषु देवं बर्हिः इति तत्र नाग्निर्नेन्द्रो न सोमः इत्यादिपठामश्च ॥

द्यौर्भूमिरापो हृदयश्चन्द्रार्काग्नियमानिलाः ।
रात्रिः सन्ध्ये च धर्मश्च वृत्तिज्ञाः सर्वदेहिनाम् ॥ १०

इति

——

( v )

पुरोजिती वो अन्धसो व्याचिख्यासति माधवः।
प्रयाजदेवयाजादौ वक्तव्यं सम्प्रदर्शयन्॥

भवन्तीहोभये देवाः प्रबला दुर्बलास्तथा।
सूर्यः सोमो देवगुरुर्भौमः सौम्योऽर्किभार्गवौ॥ १

कठैर्ग्रहाणां सर्वेषान्तत्र यज्ञः प्रचोदितः।
भौमाय नवकपालम्पुरोडाशमिति श्रुतिः॥ २

समस्ता सावगन्तव्या कठकाम्येष्टितो बुधैः।
हवींषि दक्षिणाश्चैव प्रकारश्च बुभुत्सुभिः॥ ३

भवन्ति प्रबलैरन्यैर्दुर्बलाश्च समन्विताः।
हविर्भाजस्ततस्तेषाम्पृथङ्मन्त्रा न कल्पिताः॥ ४

श्रुतिसामान्यतस्तेषान्तत्र याज्याश्चरुक्रमात्।
अग्निर्मूर्धोद्बुध्यस्वाग्ने प्र वः शुक्राय चोदिताः॥ ५

श्रुतिसामान्यतः प्रीतास्तत्र चाङ्गारकादयः।
अङ्गारकस्य चाग्नेश्च समाना प्रकृतिर्ह्यगिः॥ ६

तथैव देवो यः कश्चिदाप्रीसूक्तेषु कीर्त्यते।
तात्पर्यं समिदादीनाङ्कीर्तनेष्विति निर्णयः॥ ७

अचेतनानिज्यमानानग्निर्दृष्ट्वेदमुक्तवान्।
प्रयाजा मे अनुयाजाः सर्वा दत्तेति देवताः॥ ८

एवञ्च हुतभागग्निः प्रयाजेष्विति मन्यते।
तमेव प्राग्वषट्काराद्धयेयं यस्ककुलोद्भवः॥ ९

नन्वनाग्नेयतां स्पष्टम्पुनराधानगोचरात् ।
ब्राह्मणादवगच्छामस्तदिदम्ब्राह्मणं श्रुणु ॥ १०

नानाग्नेयम्पुनराधेये कुर्यात् । यदाग्नेयम्पुनराधेये कुर्यात् वृद्धमेव तत् । अनाग्नेयं वै तत्क्रियते । यत्समिधस्तनूनपातमिडो बर्हिर्यजतीति ॥

अग्नेर्वाचकशब्दानां स्पष्टं याज्यास्वदर्शनात् ।
अनाग्नेयप्रवादोऽयमिति यास्कस्य दर्शनम् ॥ ११

ऋतवो ह वै देवेषु यज्ञेषु भागमीषिरे ।
इत्यादिके शतपथे प्रयाजा ऋतुदेवताः ॥ १२

उक्ताः प्रवेशितोऽग्निश्च तेष्वृतुष्विति दर्शनम् ।
वसन्तमृतूनामिति तेन कुर्मोऽनुमन्त्रणम् ॥ १३

## अत्र वाजसनेयकम् ।

स वै समिधो यजति । वसन्तो वै समित् । अथ तनूनपातं यजति । ग्रीष्मो वै तनूनपात् । ग्रीष्मे ह्यासाम्प्रजानान्तनूस्तपति । इति तत्र श्रूयते ॥

स होवाचाग्निः । यन्मान्न प्रथमं यजध्वे क मम ततो भागः स्यादिति । ते होचुर्देवाः । न त्वामायतनाच्च्यावयेमेति । तानृतूनग्निरुपमन्त्रयाञ्चक्रे । इत्युक्त्वान्तत आह । स एषोऽग्निर्ऋतुष्वन्वाभरत । स ह वा ओषधीः पचति । या इमा ऋतवः पचन्तीति ॥

ननु च द्विप्रकृतयः स्वयमेवेति केचन ।
स्वतन्त्रा देवतास्तेषामाग्नेयत्वङ्कथम्भवेत् ॥ १४

तत्परैः परिहारोऽत्र वृद्धैर्वाच्यः प्रयत्नतः
अस्माकम्परिहारोऽत्र शीघ्रन्न प्रत्यभादिति ॥ १५

इति

---

(vi)

# अयं स यस्याथाध्यायं व्याचिख्यासति माधवः ।
# देवानां यज्ञसम्बन्धे वक्तव्यं सम्प्रदर्शयन् ॥

---

इतः प्रत्तेन हविषा वर्तन्ते दिवि देवताः ।
अतः प्रत्तैरिह वयं यथा वर्तामहे जलैः ॥ १

समानमेतदुदकमुच्चैत्यव चाहभिः ।
इतीममर्थम्प्रोवाच दीर्घतमा मामतेयः ॥ २

## ब्राह्मणञ्च भवति ।

इतः प्रदानन्देवा उपजीवन्त्यमुतःप्रदानम्मनुष्याः । इति ॥

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
इतीयम्भगवद्गीता ब्रूतेऽर्थमिममञ्जसा ॥ ३

इतिहासपुराणेषु ननु लोकाः प्रदर्शिताः ।
उद्यानभवनोपेताः सर्वकामसमन्विताः ॥ ४

देवासुराणां युद्धञ्च पश्वन्नादिनिमित्तकम् ।
किमिच्छन्ती सरमेति पणिभिः पशवो हृताः ॥ ५

अंशावतारा देवानां सन्तीति कवयो विदुः ।
नानाविधांश्च ते लोकानधितिष्ठन्ति पार्थिवान् ॥ ६

सप्तद्वीपा वसुमती मध्ये मेरुश्च तिष्ठति ।
अर्वाग्घिमवतोऽस्माभिर्मनुष्यैर्दृश्यतेऽधुना ॥ ७

यजन्ते त इमे देवास्तेषु लोकेष्ववस्थिताः ।
वैदिकांश्च पुराकल्पांस्तन्मूलान्कवयो विदुः ॥ ८

एवञ्च देवा यष्टारो यष्टव्याश्च तथाभवन् ।
अंशावतारैर्यष्टारो यष्टव्यास्तु दिवि स्थिताः ॥ ९

आप्तकामः स्विदित्यस्मिन्यदुवाच पतञ्जलिः ।
निदाने तच्च बोद्धव्यमिममर्थमभीप्सुभिः ॥ १०

एकः किमिन्द्रो देवाश्च उताहो बहवोऽभवन् ।
बहवः सन्ति सर्वे च सदृशा नामकर्मभिः ॥ ११

जनतायाञ्जनतायामिन्द्रम्ब्राह्मणमाह च ।
यज्ञेष्वेकस्य बहुषु न शक्या युगपद्गतिः ॥ १२

## अत्र ब्राह्मणम् ।

एकैको वै जनतायामिन्द्रः । एकं वा एताविन्द्रमभि सं सुनुतः । यौ द्वौ संसुनुतः । इति ॥

अत्र ब्रूम एक एव सर्वस्य जगतः प्रभुः ।
बहुष्विन्द्रः सन्निधत्ते यज्ञेषु युगपद्विभुः ॥ १३

बहवो महिमानोऽस्य सन्ति योगेन साधिताः ।
भार्यासु सोभरिरिव तैर्यज्ञेष्वेषु गच्छति ॥ १४

नाना हि त्वा हवमानाः प्रधानाः सम्प्रदर्शिताः ।
आ त इन्द्र महिमानमरन्त इन्द्र कुक्षये ॥ १५

महिम्नोऽस्तित्वमेताभ्यामवगच्छन्ति वैदिकाः ।
प्रिया धामान्ययाळग्निरिति चाधीमहे वयम् ॥ १६

# अत्र शाट्यायनकम् ।

कुत्सश्च लुशश्चेन्द्रं व्यह्वयेताम् । इत्युक्त्वाऽऽह । तावन्तरातिष्ठत् । तावब्रवीत् । आंशमाहरेताम् । आत्मना वामन्यतरस्य पास्यामि । महिम्नान्यतरस्य । इति ॥

इति

---

( vii )

नि वर्तध्वम्मानु गात व्याचिख्यासति माधवः ।
वस्वादिष्विह वक्तव्यमादितः सम्प्रदर्शयन् ॥

वसवो रुद्रा आदित्याः शाट्यायनकदर्शिताः ।
पृच्छते याज्ञवल्क्येन शाकल्याय महर्षये ॥ १

अत्र शाट्यायनकम् ।

कतमे वसव इति । अग्निश्च पृथिवी च वायुश्चान्तरिक्षश्चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसवः । एतेषु सर्वं वसुहितमिति । तस्माद्वसव इति । कतमे रुद्रा इति । दशमे पुरुषे प्राणा इति होवाचात्मैकादशस्ते यथोत्क्रामन्ति । अथ रोदयन्ति तस्माद्रुद्रा इति । कतम आदित्या इति । द्वादश मासाः संवत्सर इति ॥

प्रोवाच बृहदारण्ये शाकल्यायैव पृच्छते ।
वसूनयं याज्ञवल्क्यस्तदथ ब्राह्मणं श्रुणु ॥ २

कतमे वसव इति । अग्निश्च पृथिवी च वायुश्चान्तरिक्षश्चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव इत्यादिकं वाजसनेयिभ्यः श्रोतव्यम् । इति ॥

अरुणैर्नाम ऋषिभिर्वसवोऽन्ये प्रदर्शिताः ।
अग्निश्च जातवेदाश्च पठिता नामभिश्च ते ॥ ३

रुद्रानपि पठन्त्यन्यानरुणा गणशः स्थितान् ।
ज्ञेयास्ते प्रभ्राजमाना अरुणप्रक्रमक्रमात् ॥ ४

ये वा केचन सन्त्येते क एतेषां समन्वयः ।
क्रमेण सवनेषूक्तो विविधैर्ब्राह्मणैरिह ॥ ५

ग्रहैरिन्द्रादयोऽस्माभिरिज्यन्ते गृहदेवताः ।
अन्येषु चेज्यमानेषु कथं वस्वादयो गताः ॥ ६

वसुरुद्रादितिसुता इन्द्रेण सह सङ्गताः ।
देवता तद्विशिष्टेन्द्रः सवनानाम्प्रदर्शितः ॥ ७

वस्वादयश्च बहुभिरन्यैर्देवैः समन्विताः ।
अग्निवाय्वादयस्तेषु प्रधाना इति निर्णयः ॥ ८

त्रीणि शता त्रिसहस्रा बहवो हि प्रदर्शिताः ।
इन्द्रद्वारेण सर्वे च ते यज्ञेषु समन्विताः ॥ ९

प्रतिलोकं स्थितान्ब्रूते ये देवासो दिवीत्यृषिः ।
तेषु कः प्रथमो वर्गो मध्यमः कः क उत्तमः ॥ १०

एवंविधेषु मन्त्रेषु क्रियाकारकबोधनम् ।
शक्यतेऽनृषिभिः कर्तुन्न विविच्य प्रदर्शनम् ॥ ११

बहूनामिह मन्त्राणाङ्क्रियाकारकदर्शनात् ।
भवत्यर्थोऽपि विस्पष्टः प्रयोक्तुरिव सन्निधौ ॥ १२

अथ सङ्ख्यासमुद्देशे भूयान्भवति संशयः ।
ब्राह्मणानि प्रमाणानि तदर्थेष्विति निर्णयः ॥ १३

एवञ्च कथितेऽप्यर्थे नानादिग्भ्यः समागताः ।
पठन्ति चेद्ब्राह्मणानि तत एव विनिर्णयः ॥ १४

पठिता देवताध्याये त्रिषु स्थानेषु देवताः ।
विद्यन्ते स्तुतयो यासान्ता एता यास्कदर्शिताः ॥ १५

केचिद्वस्वादयस्तेषु ये प्राग्ब्राह्मणदर्शिताः ।
प्रजापतिश्चाश्विनौ च बहिर्भूता इति स्थितिः ॥ १६

अष्टौ वसव इत्युक्त्वा यदेतावत्त्वकीर्तनम् ।
तत्तु वस्वादिबाहुल्यस्योपेक्षार्थङ्कृतं विदुः ॥ १७

अष्टौ वसव एकादश रुद्रा द्वादशादित्या एतावन्तो वै देवताः । इति ब्राह्मणम् ॥

इति

---

(viii)

## प्र मा युयुज्रे प्रयुजो व्याचिख्यासति माधवः। यदात्मविषये वाच्यन्तदादौ सम्प्रदर्शयन्॥

एक एव महानात्मा बहुधाभूय तिष्ठति।
यथा सोभरिरेकः सन्बहुधा योगतोऽभवत्॥ १

बहुधांशावतारेषु यथा वा भगवानभूत्।
इन्द्रो वाभूद्यथा सव्यो धीरो वैकुण्ठ एव च॥ २

### अत्र ब्राह्मणानि।

प्रजापतिः सविता भूत्वा प्रजा असृजत। ता विश्वकर्मा भूत्वा व्यमार्दयत्। तस्मिन्प्रजापतिर्वायुर्भूत्वाचरत्। इति॥

तदेतद्दीर्घतमसा विस्पष्टमृषिणेरितम्।
वदतेन्द्रम्मित्रमिति सुपर्णमिति चर्क्कथा॥ ३

जगद्व्यापारकरणन्तत्तद्रूपपरिग्रहात्।
विश्वतश्चक्षुरित्याद्यास्तस्मान्नात्मपरा इति॥ ४

तत्र चोपनिषत्सूक्ताः परस्य ब्रह्मणो गुणाः।
सर्वथा सम्भवे नेया ब्रह्मद्वारेति निश्चयः॥ ५

ब्रह्मैव विश्वकर्मोऽक्तं विश्वस्य करणादिति।
ब्रुवन्ति कवयः केचिदैश्वर्यादिन्द्रमेव च॥ ६

इन्द्रो मायाभिरित्यत्र न तथेच्छति शौनकः।
नैवङ्कात्यायनोऽप्याह तस्मान्नात्मपरा इति॥ ७

युक्ता ह्यस्येति चेन्द्रस्य हरयः परिकीर्तिताः ।
न सन्ति ब्रह्मणस्तेऽश्वा नान्वादेशन्तदर्हति ॥ ८

निश्चरन्ति यथा लोहपिण्डात्तप्तात्स्फुलिङ्गकाः ।
सकाशान्महतस्तद्वदात्मानोऽन्ये विनिर्गताः ॥ ९

स एष बहुधाभावो महतोऽस्माभिरीरितः ।
अणवो जीवसंज्ञास्ते नानाकर्मफलैर्युताः ॥ १०

व्याप्य वायुर्यथा प्राणांस्तिष्ठत्येको बहूनिह ।
तथा महानिमाञ्जीवानेकः सन्व्याप्य तिष्ठति ॥ ११

पयसीव घृतङ्गूढमरण्योरिव पावकम् ।
व्याप्तन्नापक्वकरणास्तम्पश्यन्तीह मानवाः ॥ १२

ततो विनिर्गता जीवा यदैकीभावयन्त्यमी ।
अग्निनाग्निमिवात्मानञ्ज्ञानन्त्यन्येन्द्रियैरपि ॥ १३

योगेश्वरेण तदिदं याज्ञवल्क्येन भाषितम् ।
योगी मुक्तश्च सर्वासां ज्ञानन्त्वाप्नोति वेदनाम् ॥ १४

ब्रह्मैव नित्यमस्माकन्ततः सर्वमभूदिदम् ।
तदेव प्रलयेऽभ्येति समुद्रमिव निम्नगा ॥ १५

## अत्र महोपनिषत् ।

महानव्यक्ते लीयते । अव्यक्तमक्षरे लीयते । अक्षरन्तमसि लीयते । तमः परे देवे एकीभवति । इति ॥

यतः सर्वमिदम्भूत्वा महानात्मा व्यवस्थितः ।
तस्मादग्न्यादिविषयो वेदस्तत्र प्रतिष्ठितः ॥ १६

अनित्यवादा य इह जीवप्रकृतिगोचराः ।
आ महाप्रलयात्स्थानात्ते भाक्ता इति निश्चयः ॥ १७

पुरुषम्प्रकृतिश्चैव विध्यनादी उभावपि ।
इति ब्रूते विशेषेण भगवानिह नित्यताम् ॥ १८

सदेव सोम्येदमग्र आसीदिति च दृश्यते ।
ततः प्रकृतिनित्यत्वङ्कविभिः कैश्चिदीरितम् ॥ १९

अथैतदिति पृच्छामि किमग्नौ रूपमात्मनः ।
यथाग्निरग्नौ प्रक्षिप्त इत्युक्तेरुत वा जलम् ॥ २०

व्याप्य वावस्थितो वायुर्यद्वाकाशो भवेदिति ।
तं वयन्न विजानीमः कथम्ब्रूते विनिश्चितम् ॥ २१

नानाभ्युपाया बहवः प्रदिष्टा
महर्षिभिस्तस्य महात्मनो नु ।
तेष्वाशु यत्नः क्रियताम्भवद्भि-
र्न हेतुवादैर्भवितात्मलाभः ॥ २२

इति

—

# ऋग्वेदानुक्रमणी

VIII

## मन्त्रार्थानुक्रमणी

(i)

अष्टमोऽथाष्टकस्तस्मिन्नध्यायादिषु वक्ष्यते।
यत्किञ्चिदस्ति मन्त्रार्थे वक्तव्यमिह बह्वृचैः ॥

नानाविधैरभिप्रायैर्मन्त्रा दृष्टा महर्षिभिः ।
भूयसान्तेषु विज्ञातो भवत्यर्थो यथा तथा ॥ १

वैश्वदेवेषु सूक्तेषु न विविच्येह देवताः।
केषुचित्कथिना हेतुस्तत्र ह्यर्थाविनिश्चयः ॥ २

तथा संवादसूक्ते न प्रत्येकङ्कथयत्यृषिः ।
न त्वनस्वन्ता सत्पतिरिति सूक्ते तथाब्रवीत् ॥ ३

समुद्रादूर्मिरित्येतद्बहुधा सम्प्रदर्शितम् ।
शब्दाश्च विशयास्तत्र तादृशानि बहूनि च ॥ ४

मन्त्रेष्वपि च दृश्यन्त ऋषयो ब्राह्मणेषु च ।
देवताश्च स्वरूपस्था नार्थो वेदेन कथ्यते ॥ ५



10

न शक्योऽनृषिभिर्वक्तुमृगर्थ इति निश्चयः ।
यद्वेदाच्छक्यते ज्ञातुन्तदुवाचात्र शौनकः ॥ ६

शाकल्यः पाणिनिर्यास्क इत्यृगर्थपरास्त्रयः ।
यथाशक्त्यनुधावन्ति न सर्वङ्कथयन्त्यमी ॥ ७

अस्माभिस्त्विह मन्त्राणामर्थः प्रत्येकमुच्यते ।
येऽज्ञाता ये च सन्दिग्धास्तेषां वृद्धेषु निर्णयः ॥ ८

संहितायास्तुरीयांशं विजानन्त्यधुनातनाः ।
निरुक्तव्याकरणयोरासीद्येषाम्परिश्रमः ॥ ९

अथ ये ब्राह्मणार्थानां विवेक्तारः कृतश्रमाः ।
शब्दरीतिं विजानन्ति ते सर्वङ्कथयन्त्यपि ॥ १०

ताण्डके शाट्यायनके श्रमः शतपथेऽपि च ।
कौषीतके काठके च स्याद्यस्येह स पण्डितः ॥ ११

ऐतरेयकमस्माकम्पैप्पलादमथर्वणाम् ।
तृतीयन्तित्तिरिप्रोक्तञ्ज्ञानन्वृद्ध इहोच्यते ॥ १२

न भाल्लवकमस्माभिस्तथा मैत्रायणीयकम् ।
ब्राह्मणञ्चरकाणाञ्च श्रुतम्मन्त्रोपबृंहणम् ॥ १३

यज्ज्ञानात्कथयन्तीह येऽर्थवादश्चतुर्विधम् ।
दृष्टमर्थमिवायत्नात्तानुपासीत पण्डितः ॥ १४

इति

---

( ii )

## ये यज्ञेन दक्षिणया व्याचिख्यासति माधवः । मन्त्रब्राह्मणयोरर्थे वक्तव्यं सम्प्रदर्शयन् ॥

मन्त्रे मन्त्र ऋषीन्ब्रूते भगवांस्त्विह शौनकः ।
छन्दांसि देवताश्चैव किन्तथार्थन्न भाषते ॥ १

तेष्विवार्थे न तात्पर्यमिति वक्तुन्न युज्यते ।
पदे क्रमे च कुरुते यस्माद्यत्नमतन्द्रितः ॥ २

छन्दोदेवतयोः कृत्वा सामान्याल्लक्षणम्पुनः ॥
प्रतिमन्त्रञ्च वदति किमर्थन्न तथावदत् । ३

सुज्ञातोऽर्थस्ततो नोक्त इति केचिद्व्यवस्थिताः ।
दुर्ज्ञानोऽर्थस्ततो नोक्त इति केचिदभाषत ॥ केश्चिदभाष्यत कश्चिदभाषतेति वा पाठः । ४

ननु च ब्राह्मणार्थोऽपि दुर्ज्ञानः कथ्यते कथम् ।
कथयन्ति हि कर्माणि कल्पसूत्रैः समञ्जसम् ॥ ५

अत्र ब्रूमो ब्राह्मणार्थमपि मध्यमबुद्धयः ।
अपरे चानुधावन्ति केवलादपि पाठतः ॥ ६

समाना बहवो वेदाः सन्ति न्यायाश्च लौकिकाः ।
ब्राह्मणार्थो बहुविदा शक्यो ज्ञातुम्प्रयत्नतः ॥ ७

न्यायशब्दौ ब्राह्मणेषु भवेतां विशयौ यदि ।
वदन्ति बहुधा तत्र कल्पसूत्रकृतोऽपि च ॥ ८

इन्द्राण्येन्द्रस्य संवादो वि हि सोतोरसृक्षत ।
न तस्मिन्गहने सूक्ते विवेकं शौनकोऽब्रवीत् ॥ ९

न दोषो बहुधा वादे ब्राह्मणे दर्शनात्तथा ।
ब्राह्मणार्थो हि बहुधा कल्पसूत्रैरुदीर्यते ॥ १०

ननु शाखा बहुविधाः कल्पसूत्रकृतोऽपि च ।
एकैकामाश्रिताः शाखामन्याश्चान्त्राशयात्पुनः ॥ ११

न युक्तः परिहारोऽयञ्जैमिनिः सर्ववेदवित् ।
अर्थन्निराकृतन्तेन कार्यम्बौधायनोऽब्रवीत् ॥ १२

एवम्बहून्युपादाय ब्राह्मणानीह भाषते ।
वैकल्पिकान्बहूनर्थानेवङ्कात्यायनादयः ॥ १३

मा प्राक्षीस्तिष्ठ न वयज्ञानीमोऽत्र विनिर्णयम् ।
ब्रूते यास्कस्तु मन्त्रार्थे शाकल्यश्चानुधावति ॥ १४

इति

(iii)

देवानान्नु वयज्ञाना व्याचिख्यासति माधवः ।
अपरैरपि वेदार्थो वक्तव्य इति दर्शयन् ॥

---

तत्र केचन मन्यन्ते समस्तश्रुत्यदर्शनात् ।
गूढत्वान्मतिमान्द्याच्च नार्थो वाच्योऽपरैरिति ॥ १

विस्तृतः शाट्यायनके ताण्डकार्थस्य निर्णयः ।
तथा शतपथेनान्या यजुःशाखाः प्रपञ्चिताः ॥ २

अध्यवस्यन्ति मन्त्रार्थानेवं मन्त्रान्तरैरपि ।
शाखास्वन्यासु पठितैर्विस्पष्टार्थैर्मनीषिणः ॥ ३

आश्विनार्भवसूक्तानामाश्विनैरार्भवैस्तथा ।
स्थितैर्देशान्तरे कुर्म इतिहासविनिर्णयम् ॥ ४

गूढाः पदार्थवाक्यार्थाः सृण्येवेत्यादिके तथा ।
तस्मान्नाल्पश्रुतैर्मन्दैः कार्यो वेदार्थनिर्णयः ॥ ५

तथा च याज्ञिका विप्राः कल्पैरेवार्थनिर्णयम् ।
कुर्वन्ति न त्वपेक्षन्ते मन्त्रं वा ब्राह्मणानि वा ॥ ६

अत्र ब्रूमः कल्पकाराः सर्वा जानन्ति न श्रुतीः ।
तदापस्तम्बवचनादस्माभिरवसीयते ॥ ७

## अत्रापस्तम्बः ।

ब्राह्मणोक्ता विधयः । तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते । इति ॥

उत्सन्नेष्वपि पाठेषु स्मार्ता धर्माः प्रयोगतः ।
इदानीमनुमीयन्ते ननु श्रौतास्तथाविधाः ॥ ८

अदृष्टसर्वशाखाश्च कुर्वन्त्यर्थविनिर्णयम् ।
कल्पसूत्रकृतः सर्वे स्वदृष्टाभिरिति स्थितिः ॥ ९

कश्यपार्षाणि सूक्तानि सहस्रं शौनकोऽब्रवीत् ।
त्रैष्टुभान्येकभूयांसि जातवेदस इत्यतः ॥ १०

आत्मना चाप्यदृष्टानि कथन्तत्राश्वलायनः ।
निश्चित्योवाच वेदार्थङ्कथं वा शौनकादयः ॥ ११

यत्र गूढार्थता तत्र तेषामप्यविनिर्णयः ।
ब्रह्मविद्यां वदन्तीति श्रुतिस्तत्र निदर्शनम् ॥ १२

वदन्ति बहुधा तत्र स्याच्छब्दो विशयो यदि ।
न्यायांश्च परिगृह्णन्ति विरुद्धानितरेतरान् ॥ १३

अवदानं स्विष्टकृतो नाज्याज्जैमिनिरिच्छति ।
बौधायनस्त्वाज्यादपि सकृद्ग्रहणमिच्छति ॥ १४

अङ्गोपाङ्गविदा तस्माद्यथाशक्त्यर्थनिर्णयः ।
कार्यो वेदस्य रक्षार्थमिति वृद्धेभ्य आगमः ॥ १५

प्रयोगवृत्तिभिः शक्यः कार्यार्थस्य विनिर्णयः ।
नैतावता विनिर्णेयः कल्पार्थो भवतोऽपि च ॥ १६

परिषद्यस्य वचने न दोषमधिगच्छति ।
तमबुद्धिङ्कथम्ब्रूमः प्रब्रवीतु स एव नः ॥ १७

निर्णयः कल्पसूत्राणां श्रुतिस्मृत्योस्तथैव च ।
इतिहासपुराणानाम्परिषद्येव तिष्ठति ॥ १८

इति

——

( iv )

## वि हि सोतोरसृक्षत व्याचिख्यासति माधवः।
## ऋग्भाष्यकृद्विवक्तव्यमादितः सम्प्रदर्शयन् ॥

अधीतसाङ्गवेदोऽपि पदार्थमिह मानवः।
बाहुश्रुत्याद्विजानाति व्यसनादभियोगतः॥ १

जघनार्धे कुरुक्षेत्रे शर्यणावद्ध वै सरः।
अस्तीति शाट्यायनकन्ताद्विदच्छर्यणावति ॥ २

महः क्षोणस्याश्विनेति क्षोणो वीणेति दर्शितम्।
चत्वारि शृङ्गा व्याख्याता ब्राह्मणेऽथर्वणामिति ॥ ३

अव्युत्पन्नाः प्राक्पदार्थाः कल्प्यन्ते यत्नतोऽपि च।
इह प्राज्ञैर्व्यसनिभिः पदवाक्यानुसारिभिः॥ ४

आश्विनार्भवसूक्तानामाश्विनार्भवदर्शनात्।
निर्णयोऽर्थस्य भवति सोऽभियोगः प्रकीर्तितः॥ ५

ज्ञातेष्वपि पदार्थेषु वाक्यार्थपरिकल्पनम्।
अशक्यमृक्षु बह्वीषु नरैरकृतबुद्धिभिः॥ ६

तस्मात्पदार्थवाक्यर्थान्प्रयत्नेन प्रदर्शयेत्।
नान्यत्किञ्चिदपि ब्रूयान्निरुक्तमपि तादृशम्॥ ७

भाष्याणि वैदिकान्याहुरार्यावर्तनिवासिनः।
क्रियमाणान्यपीदानीन्निरुक्तानीति माधवः॥ ८

स्कन्दस्वामी नारायण उद्गीथ इति ते क्रमात्।
चक्रुः सहैकमृग्भाष्यम्पदवाक्यार्थगोचरम् ॥ ९

द्वादशाच्छादनार्था स्युर्ददंभ………[1] ।
भरणार्थौ[2] परिख्यत्स्यात्परिख्यंश्च निषेधने[3] ।
त[4]तान विव्यक् ततनदनष्टां विव्यचन्त च ।
विधावभुवि…[5]सप्त व्याप्तवाचक्रिया इति ।
ततनन्ता प्रथेतांच व्यमिमीत वितत्निरे ।
आतन्वते चाततने व्यातिरस्ततिनिषे तनत् ।
नव विस्तारकर्माणो मिमेथा क्रोशनक्रियः[6] ।
अभ्यमन्त रोगकर्मा[7] विरेथे स्या न्निवारणे[8] ।
आजुहोत हुवे ह्वन्त ह्वयन्ते जुहुरे तथा ।
आह्वानार्था अमी पञ्च निविशन्ते महीयते ।
निषीद[9]ध्वमासते च सीदा सत्सि निषीदत ।
ववृतुं नीमिमृक्षुश्च शिश्रीत निषसत्थ च ।
क्षयन्स्यादच्छदयते दश पञ्चापि चासने ।
अञ्जन्ति व्युद्यते ऽनज्याद्यन्धीति क्लेदनक्रियाः[10] ।
विनाशने[11] विमृष्टा स्यादध्येत्यध्ययन[12]क्रियः[13] ।
शिशात्यपि च नेनि[14]क्ते शिशीते निश्यतीत्यमी ।
चत्वारस्तैक्ष्ण्यकर्माणो नमन्ते नान[15]मीति च ।
ववन्दिरे येमिरे च निनंसै नानमन्त च ।

---

1. Many syllables are missing.
2. Number 2 is indicated by the dual.
3. Number 2 is known from the enumeration.
4. आ.
5. One syllable is missing.
6. Only one. याः.
7. Only one.
8. Only one.
9. षेदा.
10. Number is not given.
11. Only one.
12. ध्येत.
13. Only one.
14. तेति,
15. नंस.

नम्नते नमनार्थाः[1]स्युः प्रणेषद्वहन्नृतुः ।
परावह तथा शाधि पञ्च प्रणयनक्रियाः ।
खनास्यतृणदित्येतौ भवेतां खननक्रियौ[2] ।
नियच्छायादनमयो येमतुर्यमनक्रियाः[3] ।
उपक्षेति क्षयः क्षेषदाचिकेतद्दशायताः ।
शाके यक्षितो धिक्षित च निविश्यन्निषसत्थ च[4] ।
शेष ऊषतुरित्येते निवासे द्वादश स्मृताः ।
अविवि[5]क्तः संविविक्तो न्विच पृथ्ङ्याह्वियन्ति च ।
विवर्तते च यतथो वियोरवदिषीथ च ।
योषिद्वियोथाः परिगा विभराश्चातयस्व च ।
योधि योषति च तथा ववयस्यपि षोळश ।
पृथक्करणकर्माणः प्रासि पूर्धि पिपिन्वथुः ।
पृणक्त्यापृण पर्षञ्च सिञ्च मि[6]त्रति विव्यथुः ।
निरप्श्रतेऽपिप्रत[7] च पृणेथामापृणत्तथा ।
दुहन्ति पप्रथुः सिञ्च पूरयन्तु पिपर्ति च ।
उत्पुपूर्या मन्दयाञ्च विंशतिः पूरणक्रियाः ।
आपि...[8]हर्षयन्ति पिपर्ष्यञ्च त...[9]तर्पयः ।
प्रीणीत जिन्व मृळत मन्दिषीमहि धातवः ।
रारंधयति वैराजा[10] भवन्ति प्रीणनक्रियाः ।
अक्षोभयत्प्राक्षिणाश्च पिपीळे संपिणक्तथा ।
चत्वारः पेषणार्थाः स्युः [11]पतत्पप्नुशु चापतत् ।
पाद्यपानू नुथाः पप्तन् पञ्च स्युः पतनक्रियाः ।
विरोह विरुहेमेति वर्तते द्वेऽपि[12] रोहणे ।
प्रचक्षयाविः सन्तीति व्यञ्जतश्च प्रकाशने[13] ।

---

1. Number is not given.
2. Number 2 is indicated by the dual.
3. Number is not given.
4. Defective metre.
5. अतिवी.
6. वि.
7. व्र.
8. Two syllables are missing.
9. Space is marked in ms.
10. 10·10.
11. त्व.
12. वि.
13. Number is not given.

प्रतिमिमीते ममतुर्ममाते चाते चामि मिमीत च ।
वि[1]ममते पञ्चमश्च परिच्छेदनवाचकाः ।
श्रुवन्तु श्रुधि शृण्वन्तु त्रयोऽमी श्रवणाक्रियाः ।
पुनात्यव्यत शुन्धन्ति पुनीतन पुनन्तु च ।
पवनार्था इमे पञ्च शुन्धयन्तु मृजन्तु च ।
आधावत च संमार्ज्मि मर्मृज्म च तथा वुपोत् ।
षळमी शोधनार्थाः स्युरथ राधति रीरधः ।
साधते साधनार्था[2] स्युरशमिष्ठाः शमक्रियः[3] ।
शुष्यति स्रेधति तथा क्षीयन्तेऽपि च[4] तन्दते ।
चम्नच्छाम्यति पायन्ति दस्यत्यपि च शश्रमुः ।
नव शोषणकर्माण ऊषुरौच्छद्वियाय च ।
उवासावासयन् पञ्च व्युष्टिकर्माण ईरिताः ।
समव्यद्वेष्टनार्थः स्या[5] द्विभागे प्रतिवीहि च ।
मर्षिष्ठाः प्रममर्षेति धातू विस्मरणक्रियौ[6] ।
श्रीणन्त्यशिश्रियुश्चैव[7] तथा श्रीणीतनाञ्जते ।
चत्वारः श्रयणार्थाः स्युः पर्यास परिवृङ्क्ष च ।
परिवृक्तं परिवृज्यात्तथा परिवृणाक्षि च ।
परिवर्जनकर्माणो [8]श्रेषतेऽधिश्रयत्तथा[9] ।
अपच्योऽष्ठा विवहीति चत्वारः प्रच्युतिक्रियाः ।
मरै मर्मर्तु मुमुरत्तथा मम्रुर्मरामहै ।
रूपाणि मरणार्थानि[10] पृच्छा प्राट् प्रश्नमाहतुः[11] ।
रणद्रणन्त रण रणन्ते[12] राणिषुस्तथा ।
ररन्धि रतिकर्माणो[13] निर्वापय शमक्रियः[14] ।

---

1. चु.
2. Number is not given.
3. Only one.
4. च missing.
5. र्थ...
6. Number 2 is indicated by the dual.
7. व missing.
8. Number is not given.
9. र्म.
10. Number is not given.
11. Number 2 is indicated by the dual.
12. म.
13. Number is not given.
14. Only one.

अध्येयानुक्रमण्येषा कृतोपनयनैर्द्विजैः ।
दाशतय्यर्थमिच्छद्भिः केशवाय नमो नमः ॥

आख्यातानुक्रमणी समाप्ता ॥

---

## नामानुक्रमणी ।

---

ओं नमो वासुदेवाय नामधेयविनिर्णयः ।
वृद्धोपदेशादाख्यताद्विशेषणसमन्वयात् ।
स्वरतो ब्राह्मणादर्थाद्भूर्भूमिः क्ष्मा क्षमादितिः ।
ग्मावनिर्गौरिळा[1] वज्रा ज्मा माता दुहिता क्षितिः ।
पृथिवीयं वर्धयन्ती पद्या पूषा रिपोर्जनी ।
वसहैळोर्वरा गोत्रा मीमोर्वी निर्ऋतिर्मही ।
क्षोण्युरूची गातुरमः क्ष्मा श्रेष्ठा क्षेत्रफर्वरे ।
विशिष्टे सोदके पथ्या ह्यधिका बृहती[2] तथा ।
गोगोत्रे शाकलैर्हेये इति केचन वैदिकाः ।
धन्वः स्यान्निर्जले देशे लोगे लोष्टं भवेदिति ।
गृहा दुर्या दमो योनिः स्वसरं विदथस्तयः ।
क्षयो वरूथं वृजनं पस्त्या हर्म्यं गयः पदम् ।
दुरोणं वर्तनिः शर्म विष्टप् क्षेमो निवेशनम् ।
पाथो ज्म वसतिर्वास्तु सद्मौको वर्त्म निष्कृतम् ।
पदवीयं सदः केत ओक्यं छायास्तवर्त्मनी ।
अमा सधस्थं शरणं कक्ष्यं नीडं धरीमणि ।
पाजो रजः सधिः सानुः कृत्तिस्थानं छर्दिर्जगत् ।
जन्मस्थानं भवेन्नाभि राष्ट्रीया यत्र भुज्यते ।
काकम्बीराग्निधाने द्वे काकस्थानंमहानसे ।
निम्नं गम्भं गम्भरं च दश[3] प्रवणवाचकाः ।
देशे परं गुणयुते भवेदिरिणमूषरे ।
अध्वा गातुः पविः पन्था वृजनं सूरयः स्रुतिः ।
शुदेम वर्त्म वयुनं[4] गव्यूतिर्वह्मजंहसी ।
सीता भीता व्यथिः पथ्या पदान्यूतिः सुगायने ।

---

1. सा.
2. 38.
3. There are not ten words.
4. मं.

वर्त्म निःसरणं रीतिः पञ्चविंशतिरध्वनः ।
मध्ये यत्र दशोषित्वा गूढमार्ग्निं दिवौकसः ।
अविन्दन्दशान्तरुष्यः सोऽध्वा कौषीतकोदितः ।
दूरं पराकं परममाकमारात्परावतः ।
अन्तः परं पराचैश्च नव दूरार्थवाचिनः ।
आसात्प्रापित्वेऽन्तमीके नेदीयः समयाम्बरम् ।
उपाकोपह्वरावांका अन्त्यर्वावत्प्रतिह्वरम् ।
तळित्समीकमवममन्तमोपमतुर्वशाः ।
अष्टादश समीपार्था वनारण्ये तथारणः ।
अरण्यानीति चत्वारि[1] तत्र ज्ञानिर्जला इति ।
अद्रिरश्मा गिरिः सानुरूप्यहर्यतपर्वताः ।
ग्रावाणो हिमवानूर्वो दश पर्वतवाचकाः ।
तत्रैको मूजवान्नाम गुणवत्सोमसंभवः ।
वृक्षा वनानि तरवो वनिनो दुर्वनस्पतिः ।
वामोर्वैल्यष्ट वृक्षाणां नीलपुष्पोत सोमतः ।
शाखा स्कन्धो वया वल्शा लिभुजा तु तला मता ।
एध इध्मोऽरणिर्दारु गर्तस्त्वेधो मृतस्य यः ।
स्थूणामेतोपमितस्तम्भो दण्डरम्भौ समाविति ।
रथो गर्तो जयुर्यामः सधस्थो रथवाचकाः[2] ।
अनो वनस्पतिश्चैव शकटी च त्रयोऽनसः ।
चक्र[3]श्चक्रिः पविर्नेमिः पृथक्[4]चक्रस्य वाचकाः ।
पातल्यमा[5]णिश्च समौ मात्रा शम्या निरुच्यते ।
समौ रथी सारथिश्च बंधुरः काष्ठसंहतिः ।
वृक्षं वनस्पतिं चाह सप्तवाध्रिस्तु वेदिकाम् ।
स्वरुयूपौ समावाङ्गुः सावने फलके चमूः ।
नौः पतत्री प्लवः पेरुर्नावा पञ्च समा मताः ।

---

1. Meaning is not given.
2. Number is not given.
3. क्रं
4. मिर्वे...
5. Space is left for a syllable after म.

प्रेङ्खो महाव्रतः प्रोक्त आघाभिर्दुन्दुभिः समौ ।
दृर्ध्यैरित्रमपाणं तत्प्रसिद्धे युगलाङ्गले ।
विस्तारो जठलो नावां कूटश्च द्रुघणो घनः ।
चमसामत्रपात्राणि जुहूर्दर्व्युपसेचनी ।
स्रुग्घृताची प्रस्रवणो होमपात्राणि सस्रुवाः ।
वीणा वाणस्तथा क्षोणी क्षोणश्चैव समा इति ।
ग्रावाणः पर्वताः कृष्णा हरयो श्वा हरिद्रवः ।
सूभर्वाद्रि सुकर्माणः सुपर्वसो नरो वृषाः ।
धिषणोपरसोमादः सुपर्णास्त्रिदिलास्तथा ।
भरित्रसानुवृषभा उस्रा मन्था मनीषिणः ।
सोभिनश्चेति गायत्रा[1] ग्रावाणः शाकलोदिताः ।
ओषध्यः शुरुधश्चन्द्रा मातरो वभ्रवस्तृणम् ।
रोम प्रस्वः पतत्रिण्यः शश्वतो जामयो ऽभ्रुवः ।
वीरुधो जरणाः सीराः केशिन्यो यवसं मधुः ।
पथ्या निष्कृतयो रायो हरिण्यो जगती तथा ।
उस्राश्चैवोपलाश्चैव समार्थाः पञ्चविंशतिः ।
छत्राकं क्षुम्पमित्याहुः तिलित्वलः प्लक्षसन्निभः ।
क्षुद्रवृक्षोऽरण्यगतः प्ररोहे चातिमङ्गलः ।
सोमो हरिश्चित्रबर्हिः शुचिक्रन्दो वनस्पतिः ।
चम्रीषश्चमसो राजा विषुणोंऽशुर्निचुम्पुणः ।
कण्वमान्माहिषो मायी शुक्रं विष्णुर्वृषानिधिः ।
पवमानोऽसुरो यज्ञो मदिरो मत्सरःकविः ।
द्रप्सःपृक्षो[2] मधुर्वेधा गौरन्धः सवनं मदः ।
मन्दी शुचिः सद्यबर्हिरिन्दुर्मासो वषट्कृतः ।
जम्बारुपुञ्ज आदार आपो रातिः क्रतुः सुतः ।
ऋदूदरो रसो भक्षः समुद्रः कलशास्तपुः ।
सवो ब्रह्म भेषजं च प्रसुवोऽभिवया अपि ।
अत्यश्च सप्तपञ्चाशदेते सोमस्य वाचकाः ।

1. 24. 2. प्सवृक्षो.

कूपः कारोतरो वव्र ऋश्यदः केवटोऽवतः।
सूदः काटः क्रिविः कर्तं दर्शतश्च तथा व्रजः।
परिष्कृतिः खनित्रं वा उत्सः कूचश्च उत्सधिः।
वेशतं चमसः श्वभ्रं कूश्च द्वाविंशति[1]र्मता।
आहावश्चावपानं च निपाते तत्समीपजे।
पूर्णः कूले भिन्नदेशः कुसूलस्तूर्दरो मतः।
रज्जुः सर्गौ रश्मिपाशौ रशनाभीशुरेव च।
दामाभिभानिधा बद्धो परत्राग्रान्थिधातवः।
त्रयोदशैते नामानि रज्वाः स्युरिति शाकलाः।
नद्यो रुजानाः सरितः सिन्धवोऽवनयो मिहः।
एन्यः स्रवन्त्यः स्रवतः स्वादोअर्णा अभिष्टयः।
हिरण्यवर्णाः प्रवतः सृत्वर्यौ मातरोऽग्रुवः।
वक्षणा त्राधता कुल्या रोधचक्रा असश्चतः।
अद्रयो विसृतः पस्त्या शुम्भ्व[2]यो युवती मही।
वर्तन्यो योषणा रीतिः स्वसारो धौतयः सिराः।
सीता नाव्या ऋतावर्यौ रोधस्वत्यस्तथा वयाः।
व्यामयो वहतो यह्वयो वाश्रा रघ्यश्च रेवतीः।
वक्षण्य[3] ऊर्मयःस्रोत्या भ्वनयश्चेति जागताः[4]।
मावो रसे मम्म इति तद्विशेषा ह्यचोदिताः।
विपाट् छिपाः सुवास्तुश्च गोमती श्वेतयावरी।
अश्मन्वतीः सन्ति चान्यास्तत्र तत्र प्रदर्शिताः।
सरो ह्रदश्च सरसी नदः सिन्धुस्तथार्णवः।
उदमेघः समुद्रोऽष्टौ सरसो वाचका इमे।
जघनार्धे कुरुक्षेत्रे शर्यणावद्ध वै सरः।
अस्तीति तात्वकायुक्तं प्रसिद्धे फेनबुद्बुदे।
तुग्वतीर्थे समे प्राहुः शीपालं शैवले भवेत्।
उदकं पिप्पलं शापमापो गावोऽम्बयः स्वधा।
अर्णो घृतं पयः शुम्भ्याः सलिलं विषमायुधम्।

1. Meaning is not given.
2. भ्वो.
3. पक्षिण्य.
4. 48 Meaning is not given.

क्षोदः क्षीरं रजः काष्ठा अररिन्दरुजत्कुशाः ।
ऋतं तमोऽच्युतं रेतः कबन्धं भोजनं मधु ।
धरुणं गम्भरं द्रप्सः पुरीषं कं वनं वपुः ।
तूर्णाशममृतं पृश्निः सतीनमुद ऊर्मयः ।
अम्भः स्तर्यो रसो नाम बृबूकं शोचिराक्षितम् ।
द्रु समुद्रं बुसं तुग्र्या जनितं भुवनं नभः ।
वाताप्यं विष्पितं पाथः कृपीटं हविरिक्षपः ।
जज्झतीः शुरुधो ज्योतिः स्वोऽक्षरं क्षाम रेवतीः ।
स्त्रिया जलाषं पीयूषं वोपा ब्रह्माप संशिवाः ।
स्रोतोऽभ्रियं शर्म जन्म शम्बरं भोजनं सहः ।
महदोजो महः क्षेम पवित्रं व्योमजामयः ।
स्वेदो गर्भोऽघ्न्या च धाम द्युम्नमुद्रं यशोमयिः ।
सिन्धवोऽवनयः सर्गा अभ्रं व्रामातरिश्वरीः ।
पृश्निगर्भा जीवधन्या वाण्यो नद्यो सिहृस्तथा ।
अनुष्ठाः क्षद्म मांश्चत्वमार्द्रं गर्भो वना तथा ।
धामधासिस्तथा प्रस्रो योनिश्चोदकवाचकाः ।
एकविंशच्छतं तेऽमी पठिताः शाकलैरिति ।
महत्तदुद्वमित्येतदुदके पर्यवस्यति ।
अन्नं धासिः पितुः स्वाम स्वधा वाजः प्रयः सिनम् ।
इडिरा पचतं पृक्षश्चनो द्युम्नः पयोऽमृतम् ।
प्सरः ससः श्रवो राधः पित्वोष्मो भोजनं नमः ।
सनमात्मा विधिर्नेम क्षद्मपाथ इळाकूं पयः ।
आन्त्राणि भक्तमवसं ब्रह्म पीवो यशो गिरः ।
पाजोऽर्चं प्लक्षकीलाल मायुरर्को रसः सुराः ।
शुरुधो यशसः पृश्निरासुतिर्गृबिषुस्तथा ।
चतुष्पञ्चाशतं प्राहु रन्ननामानि वैदिकाः ।
धनं मघं रयिः[1]क्षत्रं वसु रिक्थं तनं यशः ।
धनिर्वादं भगश्चित्रं शेवधिर्भोजनं गयः ।
भुङ् मीळ्हं द्रविणं श्वात्रं विभत्रं सौभगं श्रवः ।
वेदो द्युम्नं वरं वार्यं मेधा हेमार्थसूनृते ।

1. or यिं.

जीवातुरिन्द्रियं श्राभस्तरुत्रं वरिवो वृतम् ।
मेहना दक्षिणा दक्षो नान्धं भागभरीमणी ।
राधो बन्धुः सुम्नगोत्रे स्वर्नृम्णं रत्नरेक्णसी ।
.......................[1]र्मन्मैथतुर्मतिः ।
जानोचथे तथाभीष्टिर्दांश गातुः पनस्तरुः ।
वसत्याथ वरूथं च......[2]शिशषक्षु धने[3] इति ।
विक्रीयमाणं वाणं स्याद्वाम देवेन [4]भाषितम् ।
हिरण्यं कृशनं चन्द्रं रुक्मोऽयो हेमभर्मणी ।
पेशोऽमृतं तथा निष्कं निष्के हारेऽपि ते दश ।
अलङ्करणवाचीनि शुभ्रैभिस्तृभिरञ्जिभिः ।
अलङ्कर्ता तु नो मर्त्यस्ततनुष्टिः स नास्तिकः[5] ।
गाव उस्रो जगत्यो म्रा मह्योऽघ्न्याः पृश्नयः पुरः ।
उस्रिया श्रीरिळा गौरी विश्वाच्यो दक्षिणा इषः ।
स्वर्योऽष्टकर्ण्यौ रेवत्यो रारयिः पशवोऽदितिः ।
धेनुः संशिश्वरी गृष्टिरुरुधारा रिधायसः ।
ऊर्जस्वत्यः पयस्वत्यः पीवस्वत्यो गवां विराट्[6] ।
चित्तगर्भा जातगर्भा निवृत्तप्रसवा स्तरी ।
वत्सः शिशुर्बष्कयस्तु वत्सः स्यादेकहायनः ।
अध्यर्धवर्षस्त्वविः स्याद्वध्रिर्मुष्के[7] हते भवेत् ।
वृषो दधिर्मुष्कभारो वृषोक्षा भीमवंसगौ ।
उष्टारो वृषभोऽनड्वान् प्रयोगो यस्तु दम्यते ।
रिरष्टोऽशक्त उत्सृष्टो वहनात्कर्षणादपि ।
पयःक्षीरं सबःपक्कं पीयूषममृतं परम् ।
दुग्धं काम्यमृतं धायः साध्वन्धो रुशदाशिरः ।
शुष्कं स्यात्षोळशं[8] तेषामाज्यं सर्पिर्घृतं मधु ।
बर्जहं वक्षणोधश्च वाचकास्त्रय ऊधसः ।

1. Many syllables are missing.
2. A syllable is missing.
3. Number is not given.
4. RV. IV. 24·9.
5. cf. Text. IV. iii. 12.
6. 30.
7. र्ध्रमुष्के.
8. Meaning is not given.

स्तनः शशः समौ स्यातां शृङ्गकृद्योपशास्तराः ।
त्वक् चर्म कृत्तिर्वृजनमविर्मेष उराविकाः ।
अजश्छागः शुगः पेत्वश्चाजकाव उरामथिः ।
सालावृकः सारमेयो विश्वयत्सरमा वृकः ।
सिंहो मृग स्तस्य............................[1] ।
इभो हस्ती तथैवेभ्य उष्ट्रगर्दभरासभाः ।
लोपाशः स्यात्कृष्णमृगः पतरुस्त्व...[2]वान्मृगः ।
वराहसूकरसृगाः शशारूश्च...........[3]
कैतवः शुन्धवः पैद्वो हरितोर्वन्त आशवः ।
किलास्यो व्यत्ययः पत्रं दधिक्रा वह्नि[4]वाघतौ ।
पतत्रिणः पतङ्गाश्च ककुह्नासः प्रतूर्तयः ।
मांश्चत्वो बभ्रवः श्रौष्टिः सप्तिः पृषतयो हरिः ।
एतग्वा तरणिर्वाजी दधिक्रावा वयोजवः ।
विप्रा गावोऽजिराः श्येनाः सर्गा रस्याश्च वक्षथाः ।
पृषत्य पतशा नप्त्यः शुचिह्नासो रघुस्तथा ।
जागता[5] न्यश्वनामानि रोहितोऽग्नेः प्रकीर्तितः ।
अरुण्यो गाव उषसां विश्वरूपा बृहस्पतेः ।
हरी इन्द्रस्य हरितः सूर्यस्याश्वौ तु रासभौ
अश्विनोर्नियुतो वायोः पृषत्यो मरुतां तथा ।
पूष्णोऽजाः सवितुः श्यावास्तेऽमी वैशेषिका दश ।
मांसं मा आमिषं क्रव्यं क्रविडामश्च षट् समाः ।
शकृच्छकस्तथा भासः शकृतो वाचकास्त्रयः ।
अश्वाजनी कशा तोदः कशिका च तुजा समाः ।
वस्त्रं वासस्तना सानुर्निर्णिगल्कं तथा स्तु च ।
वारेण्वमिति वस्त्राणि[6] वाससोऽन्ते च सिग्भवेत् ।
स्याद्वीयमानं विततं वाधूयं मन्त्रवाससि ।
पुत्रः सूनुर्यहुस्तोकः शेषोऽपत्यं नपात्प्रजा ।
तुग्जातं जत्ववो गर्भो यशो रेतो रयिस्तुजिः ।

---

1. Many syllables are missing.
2. One syllable is missing.
3. Four syllables are missing.
4. ह्नि.
5. 48.
6. Number is not given.

तन्तुर्वीरो युवाजाश्वः कुमारस्तनयस्तनः ।
वह्निजो यशसस्तान्वः पिशो मर्या वृषा शिशुः ।
दक्षो रावेतसुर्जायुः कीळिराण्डं कनीनकः ।
वाजी मीढ्वांस्तनूर्यांशुः शक्तिस्तेजश्च रश्मयः ।
जनिमा सूनरश्चापि पुत्रा एकोनजागताः[1] ।
दुहिता विट् कनी कन्या प्रफर्वी मेनिकन्यके ।
शुन्ध्यू कनीनिकाथर्वी कुमारी युवतिस्तथा ।
दौहित्रो दुहितुर्नप्तिः पौत्रोऽपि तनयो नपात् ।
अगस्त्यस्य नद्य[2] इति स्वस्त्रीया नत ईरिताः ।

स्त्रियो योषा योषणा ग्ना धेना मेना पुरन्धयः ।
नार्यो वपुष्यो रश्मिण्यो धीराः पत्न्यः कमद्युवः ।
अध्यर्यो जनयो जाया जामयोगर्भधीः पिशः ।
एषैषी महिषी केशी वेना युवतयो मतिः ।
अह्रो दिधिष्वो यादुर्य उस्रात्रिर्भावयुश्चदः ।
सत्यश्च कुलपा शर्यास्त्रिंशत्पञ्चाधिकाः स्त्रियः ।
विधवाविधुरे तुल्ये ह्स्रा स्त्री ह्रासंयुता ।
काममूर्ता वृषस्यन्ती विह्वला विदुषी समे ।
अनुचर्येनुदेयी स्यान्न्योचनी परिचारिणी ।
असपत्नी काव्यतिः स्यात्परिवृत्ता निराकृता ।

अम्बका रोदसी पृश्निः पत्न्यो रुद्रस्य कीर्तिताः ।
शचीन्द्राणी च ऋतचित्पत्न्य इन्द्रस्य ता अपि ।
जननीन्द्रस्य निष्टिः श्री पत्ना चैवादितिस्तथा ।
उत ग्ना व्यन्तु या गुङ्गू देवपत्न्यः प्रदर्शिताः ।
माता जनित्री सूर्जन्म ननामापि च केचन ।
पिता तातश्च जनिता जन्मेति पितृवाचिनः ।
ऋषभः शृङ्गवृद्धीति पितेन्द्रस्य बभूव सः ।
जामिः स्वसा च पर्यायौ समे एव वधूस्नुषे ।
जामाता विट्पतिश्चैव वधूयुर्ऋतदीधितिः ।
जास्पतिश्च विजामाता भवेदश्रोत्रियो वरः ।
भर्ता हना युवा चाकन्युवशः पतिरेव च ।

1. 47. 2. R. V. X. 60·6. 3. Number is not given.

जारो वीरः पूर्वहूतिर्वृषणो वृषभो वरः ।
धवश्च पत्युर्नामानि तानीमानि त्रयोदश ।
पत्युः स्वसाननान्दा सा उभयोः श्वशुरः पिता ।
स्यालो भ्राता तु भार्याया भर्तुश्चेदेवृदेवरौ ।
माता प्रियायाः श्वश्रूः स्यान्माता पत्युस्तथैव च ।
धीर्धिषा धिषणा केतुर्मतिर्विद्म क्रतुः श्रवः ।
मेधा मन्युर्मनश्चेतः पुरन्धिर्वयुनं शची ।
चेतनं विदथं माया मन्तुहृत्केतचित्तयः ।
द्वाविंशतिः स्युः प्रज्ञाया आगूराकृतिरिष्यते ।
बलमोजः शवः क्षत्रं वाजश्चौत्तं तपः सहः ।
पौंस्यं मज्म स्वधा नृम्णं तविषी शुष्ममिन्द्रियम् ।
शर्धो दक्षस्तरः शोचिः शक्तिः शूषमभस्तथः ।
मानुषं तुपुषिः पुष्टं त्वक्षः पुरुषता तथा ।
अमुर्यं वृजिनं रक्षो वाजः सत्वमसुर्जनुः ।
शुष्मा वेपो रयः पृक्षो वृषत्वं बन्धुयामनी ।
तुजाभ द्रविणं ब्रह्म तविषाश्चे अपस्तथा ।
असुरत्वं च पञ्चाशद्बलस्यैकाधिकं[1] भवेत् ।
मनुष्याः कृष्टयो मर्त्या आयवः पूरवः प्रजाः ।
विशो मरो जना मर्या नहुषो मनवोऽनवः ।
मर्ता व्राताश्चर्षणयो मानुषा जन्तवो मुरः ।
क्षोणयो जनिमान्यूमा जन्मानि भुवनानि च ।
केशिन्यः पुरुषा भूम चर्षणिर्वहिमाह्निनौ !
क्षितिर्व[2]नायुर्वनुषो मनुषस्तुर्वशायवः ।
देह्यो मह्यः पुरः पस्त्या जातुःपत्युरया वसुः ।
ऋभुरेवा मनुष्याणां त्रिष्टुबेकाधिका[3] भवेत् ।
पादः पत्पद्र चरित्रं च जङ्घोरुः सक्थिपकरी ।
पनी प्लवं तस्यमूलं वटूरं गुल्फमिष्यते ।
शिश्नःशेफो वैतसश्च कपृदूध्नश्च मेहनः ।
अनस्थोरु प्रजननं सवो धूर्तस्तु निष्पपीः ।
योनिर्भेदो भसत्सूम कशोपस्थे च रोमशम् ।

1. धिकं missing. 2. वं missing. 3. 45.

उदरं जठरं कुक्षिर्हार्दिगर्भः समा इति ।
उरो वक्षश्च हृदयं हृच्चत्वार इमे समाः ।
बाहू भरित्रौ भुरिजौ करः स्ना किरणोऽङ्कुशम् ।
हस्तो[1] विनं गृसः पाणी गभस्ती शकरी इति ।
बाह्वोरेकादशैतानि मूलमंसत्रयोरिति ।
अङ्गुल्यो योषणः शाखा वृशो नप्त्यः क्षिपो विपः ।
अण्व्योऽग्रुवो दीधितयो धितयो जामयो धुरः ।
अथर्योऽवनयः कक्ष्या स्वसारो रशनोस्त्रयः ।
शर्यो योक्राणि हरितो हस्त्यभीशुगभस्तयः ।
क्षपाश्चाङ्गुलिनामानि षड्विंशतिरिमानि नः ।
ग्रीवा ग्रयः शिरो मूर्धा शीर्षोखे शिम्बलं तथा ।
कर्णःश्रोत्रं हनू शिप्रे स्यातां ते अधरोत्तरे ।
चक्षुश्चक्षोऽक्षि दृक् चक्षुर्दृङ्मुखमासास्याननाः ।
वाक् शुक्तिरिति नामानि सप्तास्यस्य प्रचक्षते ।
दंष्ट्रे जम्भे च तीक्ष्णाग्रौ दन्तौ पार्श्वगतौ मतौ ।
जिह्वा धना काकुदं च जिह्वाया वाचकास्त्रयः ।
शिप्रे हनू नासिके वा तथा यास्को[2]ऽब्रवीदिति ।
शिरस्त्राणेऽपि शिप्रा स्यात् कपर्दस्तु शिखा मता ।
मांसं शिरस्यं मस्तिष्कं केशाः स्युर्मूर्धजा इति ।
रोम लोम तान्वमण्व्यः केशसङ्घस्तु कः स्मृतः ।
शरीरमात्मा देहश्च दमो धाम तनुर्जुसुः ।
जरायुर्ब्रह्मवपुषी मानं गात्रं च नाम च ।
त्वक् पृष्ठं गेयमेतानि देहनामानि षोळश ।
जीर्णो जुजुर्वांश्चहितस्तवीयाश्चिविराशितः ।
वृधो ब्रश्च तवाँश्चेति नव वृद्धस्य वाचकाः ।
श्रोणो विभग्नजानुः स्याच्छयावः कुष्ठेन दूषितः ।
जरणा पलितो वव्रिर्जरा यक्ष्म गदो रपः ।
स्रामोऽमीवा रजो रोगो विशंसो द्वादशो भवेत् ।
अश्लीलस्तु कृशाङ्गः स्या त्सुप्रतीकस्तु शोभनः ।
मनीषिणो विपो विप्रा गृत्सा विप्रा विपश्चितः ।

1. Some space marked before वि.        2. N. 6. 17.

क्रवयो मेधिरा धीरा वेनाः कण्वा नवेदसः ।
आकेनिपा विधातारो मतयोऽह्वयतयोऽसुराः ।
केनिपा मतुथाः कीस्ताः प्रज्ञातारः प्रचेतसः ।
चिकित्विन्मनसोऽमूरा वेविदानाः पुरन्धयः ।
ऋभुर्विद्वानुशिक् सूरिश्चिकित्वान् स्पट् कविक्रतुः ।
बोधिन्मना मन्वपाको बोहब्रह्मासिमाधवौ ।
जानन्मनोता दीर्घश्रुन्मन्तुमान्मन्तवस्तथा ।
वचोविदश्च <u>प्रज्ञाः स्युः</u> <u>पङ्क्तिः पञ्चाधिका</u>[1] इति ।
अविद्वानन्धबधिरौ पाकमूकावचेतसः ।
स्तोतारः कारवो रेफा जरिता स्तोमवाहसः ।
सूरयः कीरयो रुद्रा मरुतो वृषभा नराः ।
ब्रह्माणो वसवो वाका हळो ब्रह्मकृतो मखाः ।
पादाः कण्वास ऋभवो जोगुवो मुनयः स्तुभः ।
वन्दारुः स्वरणः स्तोमो वृषा वह्निररिस्तुरः ।
सोमोवतो विप्रवचा गिरोऽनावाश्च वेधसः ।
खेदो विभावसुर्गृध्रो मध्वक्तौ सब् विचक्षणः ।
अरंकृच्छशमानोऽद्रिमना स्तामुविमन्यवः ।
सखा जरन्नृषिः स्तुभ्वा बन्धुक्षिद्वृषमान्यवः ।
उक्थशा उक्थवाहाशा[2] देवो भन्दिष्ठमन्दयू ।
जोगुवानः सुश्रवसो वृधः सुभ्वा नमस्विनः ।
आप्रशुष्टिः पूर्वहूतिर्गाधिनो रघुमण्यवः ।
मनी गूर्तिर्मेदिनश्च नदनुः सूक्तवागिषः ।
स्तौनः श्वान्तः प्रमन्दो दङ्गाथिता मतयो ज्रुरः ।
ब्रह्मप्रियो गूर्तवचाः शंसो लोधो मदो मृगः ।
वचस्यवो धियो यज्ञ आङ्गूषा जूर्णिनोधसौ ।
मेधाः कृपाण उक्षाणः कामकातीः शुभा इति ।
<u>स्तोतृनामान्येकशतं</u> शाकलाः संप्रचक्षते ।
वाङ्गिवित्तन्यतुर्गौरी स्वनो मन्द्रा जनी रपाः ।
गान्धार्वी सूनृता धेना वाणीची भारती स्वरः ।
पावीरवी रवो वग्नुर्घोषः क्रन्दा इळा श्रुतिः ।

---

1. 45.

2. हाशादः

हस्कारो वाग्वनुर्गाथा प्रोथथो गौरभिष्टनः ।
माद्युः स्वाहा क्षोण्युपब्दिर्जिह्वा नाळी प्रयुक्तुपः ।
मन्द्रानुष्टप् कावकन्ये वक्ता वाणी पविस्तथा ।
वद्या विपथ्या रेवथो वामा वाक् त्रिष्टुवेकयुक् ।
स्तुतिर्ब्रह्म हवो मन्त्र उक्थं स्तोमो मतिः कथा ।
धीर्मन्यवाहः ककुहा श्लोकः काव्यं नमो वचः ।
प्रैष आङ्गूष आवृत्तिः[1] कातिर्योनिर्जरामृतम् ।
स्तुम्मनीषोचथं धीतिर्होत्रा राधस्तुतो वनुः ।
हवीम धिषणा योग्या नीथयोजनगातवः ।
अक्षराशंसवहसी सूक्तमृज्ञादनं दुवः ।
प्रथः पुरोहितिर्मन्तुर्वरूथं सक्षमवर्धनम् ।
द्यौः कीर्तिस्तवथः प्रैषो वाक्कार्या सूनृता कथा ।
शस्तिर्धनं शुषशासी मायाशीः साम धाम च ।
प्रयुजोऽवो निवचनं श्रोत्राकौ श्रौषडेव च ।
ऋतगायत्रमनना वन्दनं भन्दना तथा ।
प्रभृतिः सुमतिश्चैव पक्ता ब्रह्मकृतिस्तथा ।
अशीतिः स्तुतिनामानि मदस्तत्र निविद्भवेत् ।
ऋत्विजो ग्रावहस्तासो भरता वृक्तबर्हिषः ।
जुह्वः सबाधो होतारो देवा देवयवोऽसुराः ।
वाघतः कारवः पस्त्याः सोममादो यतस्रुचः ।
उक्षा सखाध्वरीयन्तो धीरणा संयतोऽपसः ।
सुहस्त्य ऊर्ध्वग्रावाणो युक्तग्रावा नरोह्वयः ।
हविष्मन्तस्तथा पृक्षाः काकुभा[2] ऋत्विजो मताः ।
हविर्हव्यं विश्वमिन्वं मधु यज्ञस्तनामृते ।
हविष्कृतिरपो मेधो मयो द्युम्नमृणं गृभः ।
स्वाहापूपपुरोळाशौ मन्धकं सुशमीति च ।
एकविंशः करम्भ स्याद्धविषो वाचकेष्विति ।
यजमाना विवस्वन्तो दाश्वांसः सप्तबर्हिषः ।

1. Here the word आङ्गूषा is repeated. 2. 28.

सुतावन्तो हविष्मन्तो हव्यदातिरनुव्रतः ।
यज्वानो यज्यवो यज्ञा वीतिहोत्राः सपर्यवः ।
सोमानः सोभिनः सोम्याः सुकृत्सावो हविष्पतिः ।
मघवानो निक्तहस्ता दामा दाश्वांश्च दाशुरिः ।
रातहव्या विहुत्मत्यो हताः सुष्टिधियाजुरः ।
दीर्घप्रयज्युर्धातार अर्यो यज्ञियसोमपाः ।
विधन्तो यज्ञवनस आर्या ः क्राणाश्च निःसृजः ।
इयक्षमाणो बर्हिष्मानृतावाश्वत्थसुस्नयू ।
हव्यवाड्वनिनः स्वाधीरुद्यतस्रुग्धियायवः ।
दीर्घाधियः पाकसुत्वा शिमीवानद्भुतो मखः ।
यज्ञसाचो रयिवृधो दाशाः प्राक्षुश्च सुक्षितिः ।
वृधाः सहस्रनीथाश्च हविर्दा धीरणास्तथा ।
दाश्वध्वर ऋजूयाश्च हविष्कृद्वृषभा हवः ।
ओख्यदेवो वसुधियः सुप्रावीर्देवयुस्तथा ।
त्रिसप्ततिः स्युस्त इमे यजमानस्य वाचकाः ।
कर्मविष्ट्वी दिवश्चित्तिर्ब्रह्म वीर्यं क्रतुर्व्रतः ।
अद्भुतं चरितं कर्त्वं दंसना सुवितं करः ।
कृटः सुकृत्या करणं केरुर्वायोद्यतं शची ।
अप्नोवश्चकृतं सत्यं नीतिरूतिर्महं शमी ।
उपेतिरत्वग्धि शग्म कावं जातमपः शिम्री ।
कर्वरं करणं वेपः शिल्पापत्ये क्रतुर्यकम् ।
धर्मवर्पो नाम पङ्क्तिः कर्मणः सप्तचाधिकाः[1] ।
यज्ञः सवोऽध्वरो बर्हिः सवनं यजथो यज्ञुः ।
ऋतं मघो देवतातिरिष्टिर्होत्रं महद्मम् ।
मेधसातिर्हव्यजुष्टिः स्वर्णरो विष्णुकर्मणी ।
पङ्क्तिराधा देववीतिर्मियेधो माहिनं क्षयम् ।
वेदिर्निषदनं हर्म्यं क्रतुर्वक्षो हवीम च ।
सहस्रवल्शः संहोत्रः शेवारः परिधिर्हविः ।
त्रिषधस्थो देवयज्या सोतुवीतिदिविष्टयः ।
ऋतयुक्तिः सर्वतातिः सत्रं ब्रह्म कृतिस्तथा ।

1. 47.

सहस्रसावो विदथो वीर्यंमोऽभिष्टिरेव च ।
सधमादो निषङ्गश्च क्षामर्षामसदस्तथा ।
ऋतस्य प्रभृतिः सद्म सप्तशीर्षा च धर्म च ।
महार्थं यजथस्तन्तुर्मेधो यज्ञस्य वाचकाः ।
द्विषष्टिः पङ्क्तिराधस्त्वं ब्राह्मणेन प्रदर्शितम् ।
अवन्तः पुष्करो धर्मो महावीरस्य वाचकाः ।
अव्रतस्तन्द्रयुः केपिः सुराश्वो मन्युषाविणः ।
अप्सवो यज्ञसाचश्च मृध्रवाचः कवत्नवः ।
जल्हवोऽपश्यतोऽरत्निरकर्मा दस्युकीटकौ ।
नास्तिकाव्रतनामानि दश स्युस्तानि पञ्च च ।
सुदाः पुरूरवाः कण्वो नववास्त्व उपस्तुतः ।
ययातिरेतशः कुत्सो दशस्युस्तुर्वशो यदुः ।
करञ्जः पर्णयघ्न उग्रदेवस्तथेऽङ्करः ।
अघाश्वः स्वर्णरः पेदुर्ऋज्राश्वो नहुषो मनुः ।
आयुः शातवनेयश्च तूर्वयाणश्च कीर्तिताः ।
ऋगुन म ऋज्र[1]इति यदिन्द्राग्नी यदुषु[2]च ।
वाक्यैः सर्वेऽपि राजानः प्रतीता येऽप्यकीर्तिताः ।
अहिर्वृत्रस्तथा व्यंस और्णवाभश्च रौहिणः ।
पेरुः पिप्रुरर्बुदश्च नमस्युर्वृसयस्तथा ।
विष्वग्देह्यो नार्मरश्च धुनिश्च चुमुरिस्तथा ।
शुष्णं पिप्रमृचा[3] प्रोक्ता यो व्यंस [4]मिति चेरिताः ।
त इमे देवहन्तव्या असुराः सन्ति चापरे ।
ऋषयोऽत्रिर्भरद्वाजो वामदेवश्च काश्यपः ।
वसिष्ठो गोतमश्चैव भृगुर्गृत्समदस्तथा ।
प्रियमेधः कलिर्द्युम्नो देववातो बृहद्दिवः ।
हिरण्यस्तूप इडतो विश्वसामाससस्तथा ।
गविष्ठिरः स्यूमरश्मिः परावृज्जाहुषस्तथा ।
पृथिस्तथोर्ध्वरशनो विरूपो वैन्य एव च ।

---

1. R. V. VI. 63. 9.
2. R. V. I. 108. 8.
3. R. V. I. 103·8.
4. R. V. I. 101·2.

अगस्त्योऽरिष्टनेमिश्च पलस्तिजमदग्नयः ।
निष्कग्रीवादयो वव्रेः पुत्राश्चत्वार ईरिताः ।
कण्वो मेधातिथिर्द्युम्नी विश्वामित्रो वरुत्रितः ।
बहवः सन्ति त इमे तत्र तत्रोदिता इति ।
सत्यं श्रदित्था बळतमद्धा सत्रा च सत्त ते ।
ऋत्वेत्यपि च सत्यार्थे तुल्ये स्यातां मृषानृते ।
अमायः सत्यधर्मा स्यादतथामालिको मतः ।
सत्यानृताभ्यां संयुक्तो द्वयावीस्याद्द्वयुस्तथा ।
पापोंऽहूरण एनस्वानेनस्वी पापिनो मताः ।
ए...[1]श्रि किल्बिषं वृत्रमेनोंऽहो निर्ऋतिर्ह्वरः ।
अवद्यं वृजिनं रिप्रं तमोवन्निरयं रपः ।
रेण्वार्तना रजश्चागो दुष्कृतं दुरितिस्तथा ।
ऋजीयोऽसच्च कटुकं रेतो गायत्र[2]सम्मिताः ।
पापदारिद्र्यवचना काणा रायी त्र दुर्भरैः ।
कृत्येत्यलक्ष्मीनामानि तृष्टं तृष्यन्ति येन तत् ।
उदारः प्रमतिः सूरिर्वैनः प्रयतदक्षिणः ।
पुरोऽनवभ्रराधाश्च रेवान् पुष्टिस्तुवीमघा ।
विभूतद्युम्नो मघवाँ स्तुचिनृम्णः पुरूवसुः ।
मंहनावान् वसुधितिस्तुविष्मान् स महाइळः ।
सहस्रदावाश्रुत्कर्णः सुदानुर्वाजिनीवसुः ।
विसृष्टरातिर्धनदो मीढ्वान् गृतश्रवा मतिः ।
शन्दुः कविच्छत्सुमनाः सत्रदावा महामतिः ।
दाश्वान् धनस्पृक् पपुरिर्विश्ववारो वृषन्तमः ।
महामना द्रवत्पाणिर्वृषभोऽकामकर्शनः ।
आर्योऽर्यमा दक्षिणावान् प्रचेताः सुमतिः पृणन् ।
द्रविणोदाः सुप्रदानुः सुकृतो मघवोऽसुरः ।
मंहिष्ठस्तूतुजिर्भोजः शाशदानो महामनाः ।
दानौकसश्च दक्षाय्यो जीरदानुर्विदद्वसुः ।
अशीरातिर्वसुदावा कारुधायाः प्रतद्वसुः ।
निमेधमानः कामप्रो विचेताश्चोदयन्मतिः ।

1. One syllable is missing. 2. 24.

गोविन्दुरेहिमायासौ भूरिदात्रो वृषण्वसुः ।
ऋणयावा दातिवारः स्वर्णरो गोरुधाद्रयः ।
शिक्षानरस्कम्भदेष्णाश्चित्रातिरनानुदः ।
स्पार्हराधा रध्रचोदः क्षपावांश्च रद्वावसुः ।
पिशङ्गरातिः कृष्टीप्रा भूरिदावा श्रुतामघः ।
अनुत्तमन्युः पुरुकृच्येष्टाश्चाक्षोदनो वृधः ।
तुवीरवस्तुविद्युम्न इवावानियँ एव च ।
मंहिष्ठरातिरुक्षेति दात्राख्या उत्कृती[1]रिताः ।
लक्ष्मीः श्रीर्मङ्गलं भद्रं तमोऽश्लीलांहतिर्जसुः ।
अभिशस्ती निरेकश्च शुनदुर्मत्यवर्तयः ।
निर्ऋत्यमतिवावत्वं नैर्धन्ये द्वादश स्मृताः ।
आध्रः कृशो गृभुश्चाङ्गूरधितश्च रुरेव च ।
भिक्षमाणो नाथमानः सनीयं द्रविणस्यवः ।
उत्तानहस्तो महयन्नर्थी वेनंस्तथा भ्रमिः ।
याचन्कामश्चक्रमान इच्छन् कामीक आकयत् ।
श्रद्धानस्तातृषाण इषिरास्तृणजौपशाः ।
वीर्यपाता कायमान इषुध्यन्नुशधकृशः ।
आनुष्टुभाः[2] कायमाना भिक्षमाणास्तथैव च ।
आदित्सन्नपृणन्नप्रभुञ्जयन्नप्रचेतसः ।
आतूतुजिररातीवा केवलाद्यररुः पणिः ।
अरातिश्च तथारावा दाश्वश्चादाशुरिस्तथा ।
अरायी चाकवारिश्च षोळशा दातृवाचिनः ।
अनवद्येड्यकीर्तेन्या वन्द्यो देवप्सरस्तमः ।
कीजो धिष्ण्यो विश्वगूर्तो मन्त्रो ज्यायान्मरुद्वृधः ।
नव्या पृच्या वह्नयागाः सुनीथो वम्रदर्शतौ ।
देवत्तं सूनरं काम्यं गिर्वाहा वासरी मघः ।
श्रीमतो समष्टकाव्यो ववदुक्थाः प्रयज्यवः ।
धनर्चामत्रमार्जाल्या वाविनोद्याचथोपमाः ।

---

1. 104. 2. 32.

प्रतिमानं पुनर्मन्यः स्वविवातो वपुष्टरः ।
अर्चत्रयो दुवसना अग्राद्वाना पुरुस्तुतः ।
गुहद्वद्या गीर्वाणास्तोदवेद्या यस्नुराः ।
चित्रः प्रशस्तो ज्येष्ठश्च नवीयाननवब्रुवः ।
पृथुप्रगाणो वन्द्यासः शंस्येळेन्यावृचीषमः ।
यक्ष्मी वरिष्ठावतरौ वपिष्ठा ऋणकातयः ।
काणुकामतवान् राध्यो गाथान्यः ककुहो वसुः ।
अकवो देवजुष्टा च जोहूर्तं काव्यशुभ्रिणः ।
स्तुषेय्यश्चाह्वयो यज्ञः पनीयान् प्रश्नवास्तथा ।
अह्यः सुमन्तुर्ऋषभो गध्यो नेहाश्य एव च ।
दशीकः षळशीतिः स्युः प्रशस्यवचना इति ।
राजेशानः पतिरिनः पत्यमानः क्षयन् प्रभुः ।
अर्यो राष्ट्री स्वराळिर्य इरज्यन्तो विभुस्तथा ।
एकेशानकृदध्यक्षाः कर्ता काणः करिः करः ।
विंशतिः स्वामिनामानि देवं चैके प्रचक्षते ।
त्राताविता भुगोमासः पयः पायुर्धियावसुः ।
पातावनिरवो विद्या रक्षिता पात्रमोम च ।
चतुर्दशैते त्रातारो दासाऽन्नस्थस्तथैवच ।
श्रुष्टीवा च धियंजित्वा भारवाहस्तु भारभृत् ।
श्रुष्टीवानं क्षिप्रमेके चर्मम्नाः पादुकप्रदाः ।
उपलप्रक्षिणी दासी वेषणेया प्रचक्षते ।
दासन्यत्रैतना नाम्ना समौ कीनाशकीनरौ ।
बलीवर्दाजकौ तौ च धान्यकृद्बीजवापकृत् ।
वृकलाङ्गलसीराणि फलाष्ट्रे तन्मुखे इति ।
कर्माराः कारवो विष्टी तक्षा तष्टा भृगुस्तथा ।
शिका शखानन्यतमो वृबुस्त्वेषां तु नामतः ।
ज्ञातिर्मित्रस्तथारातिर्युगापिः प्रष्टिरेव च ।
सचा सजात्यः शाकी च सनाभिः शाकजामयः ।
आप्ताः सचाभुवो ज्ञासः सजाताश्च सबन्धवः ।
अङ्गुर्योऽप्या तथा गेवः सचथः सहजानुषः ।

षड्विंशतिर्जामयः स्युर्बन्धुता सातिसंयुता ।
सख्यं साप्त सजात्याप्ते प्रपित्वं भ्रात्रमेव च ।
ज्ञातेये षट् प्रशुच्यन्ते सुखं शर्म मयः सुगम् ।
शुष्टिः स्मत्कं जनुर्भद्रं जलाषं शमनुष्टुकम् ।
सुमृळीकं तथा सानुः सुदिनं रुदियं प्रियम् ।
स्वस्तिः सुम्नं भोगशूत्रे सुगम्यं छर्दिः शुनं शिवम् ।
मार्डीकं सुवितं वस्यो वल्गु स्यूमन् युरेव च ।
स्यूमना जनिमा श्वात्राः शिम्वाता शतरा तथा ।
स्वादु स्योनामवतराः पाङ्क्ताः[1] स्युः सुखवाचिनः ।
सर्वे सुखकरेऽपि स्युः शेवृधः सुखकृन्मतः ।
शत्रवोऽभियुजोऽमीवा दस्यवो निगुतो मृधः ।
अघायन्तो निदोऽमित्राः शिश्नदेवा अरातयः ।
अत्राण्यशस्तयो दासा दिप्सवो राधसः स्पृधः[2] ।
श्वयातयः परिधयो दुर्धियो हृदयाविधः ।
शिरोऽरयो रिषः शिम्युरत्रिणो यातवो द्विषः ।
सश्चतो भूर्णयो वर्पो धूर्तयः परिषूतयः ।
अशसानाः प्रसितयो दुर्मित्रासो रिपो वृकाः ।
अत्या दुराध्यो रिपवो दुःशंसा दुच्छुना विपः ।
इरीरन्यः पृशन्यश्च वृत्राणि स्नेहतीर्दुहः ।
अंहः सपत्ना ह्वन्मृध्रा जुहुराणो द्विषन्व्यधिः ।
जिघद्वशस्तिविषुणा उपवक्ता विजामयः ।
आघायन्तो मनायन्तस्तथा वर्षारणौ ह्वरः ।
अशवा अतृषो मन्युः शत्रवः सप्ततिर्मताः ।
रक्षो यातुर्यातुजवो यातुधानाः किमीदिनः ।
ब्रह्मद्विषो मूरदेवा रेफा असुतृपोऽचितः ।
जरूथं पिशुना मृध्रा दमो दानुपृशन्यवः ।
तपूंषि दुरितामीवा शर्धन्तोऽह्योयुवस्तमः ।
तमिषीच्यो दुर्मतयः पृशन्यश्च तमोवृधः ।
रक्षस्वी सोमपरिभादनिन्द्रो द्रोघवागपि ।
द्रुहोऽप्रशस्ता व्यथयो विवाचो जत्रवः पणिः ।

---

1. 40.

2. स्मृतः.

सललूकवनिष्यन्तः कवंअदुष्कृतो शवः ।
अभिह्रुतो देवनिदः परिक्रोशो द्वयाविनः ।
अदेवा वृजिना नग्ना दुरेवा अनुधूपिताः ।
असुरा दानवा एन्यः पीयवो मायिनोऽत्रिणः ।
मित्रेरुरामात्क्रव्यादौ दुर्मन्मानः प्रियारवः ।
मिथूदृशो दुर्मतयो भूर्णिरर्वा शफारुजः ।
पतङ्गाः शृतपादासास्ततनुष्टिरदेवयुः ।
यातुमावा शरुर्नत्वं मित्रज्ञश्च कवासखः ।
अघशंसः पथेष्ठाश्च धन्या भोगनृचक्षसः ।
अदेवा उपह्स्वानो जल्हवो ग्रांहिरामुरः ।
अंहस्तथा शण्डिकाश्च रक्षसां त्रिष्टुभा[1]विति ।
प्रमगन्दबेकनाटावाह यास्कः[2] कुसीदिनौ ।
ऋषिं परावृत्कुब्जत्वादनगन्धो भवेदिति ।
स्तानो द्वयावी दुःशंसो ह्रुरश्चित्तस्करो वृकः ।
मुषीवाणास्तायवश्च ह्वरोऽघायुश्च तक्वीः ।
अघशंसः प्रस्फुरंश्च तक्वानः परिपन्थिनः ।
स्तेनाः पञ्चदशैते स्युर्भामो मन्युर्हरो ह्वरः ।
तपुरेहस्त्यजश्चैव अमोऽष्टौ क्रोधवाचिनः ।
हेळमानोऽमनाः क्रुध्मी जिहीळानश्च हीळितः ।
षष्ठो गृणानः क्रुद्धस्य भामितः सप्तमो मतः ।
युद्धं स्पृद्वृजनं वाजो भरोऽनीकं महाधनम् ।
पृतनाज्यं खजः कारः खलो मृक्षो गृणीषणि ।
संस्थं सहस्रप्रधनं दुरितं पृतना विवाक् ।
वैलस्थानं दस्यु[3]हत्यं योगः समरणं समत् ।
समोहः समिथं सेना यामवृत्रककर्दवः ।
असंत्र[4]कोशं समनमाजिभर्मोत्सवाकराः ।
खर्जषहशर्महम्मीळ्हंजनी पृत्सुतिर्युधिः ।
परिवर्गो वृत्रतूर्यमपूर्यं संगमो जुरम् ।

---

1. 88.
2. N. 6. 26., 32.
3. स्थाननस्यु.
4. असन्त्र.

अर्कसातिर्वाजकृत्यमर्भाकः संयदेव च ।
देवहूयं भयस्थं च संधाबाश्वविरिष्टयः ।
मेधसातिश्च युद्धस्य साष्टपञ्चाशदुद्धृताः ।
शूरो यवीयुदस्तुरो बाहुक्षद्दुष्टरोऽभिभूः ।
अमनस्युर्घनो निष्फाण्मरायी यावयत्सखः ।
ओजायमानः स्वतवान् पृतन्युर्द्रावयत्सखः ।
पृथुश्रवा बाळहस्त्वा तोशोऽक्रो वर्णवारणौ ।
पंक्वीरो दमूनाश्च सत्यशुष्मः सदासहः ।
सेन्योऽप्रतिधृष्टशवा अमितौजा धृषन्मनाः ।
उराणो यावयद्द्वेषो द्वयोर्युध्मोऽहेरिष्वणिः ।
अनायुधो दधृग्जित्वा पुरु...[1]ष्कृदलातृणः ।
सहो निःषहमाणश्च वृत्रखादोऽप्रतिष्कुतः ।
भ्राजदृष्टिः क्षयद्वीरो नक्षद्दाभोऽभिभूतयः ।
चर्कृत्य एधमानद्विळ्धावान् सिध्मपूर्भिदौ ।
सहस्रमूतिः प्रमरः शवसा ..[2]जिगीषवः ।
भरस्वन्तो वृथाषाहः शाशदाना अभीरवः ।
आस्क्रोऽतिष्ठन्नमृक्तश्च सहःस्थश्च घनाघनः ।
ओजिष्ठो यन्तुरो द्रप्सः साधुः शुष्मी च गोदरिः ।
सुपारो नाभशी यक्षो द्विबर्हा हवनश्रुतः ।
परमाज्यो धृष्णुषेणो वलो मृध्रश्च मांश्चतुः ।
शृङ्गी कियेधाः कुचरो रक्षो...[4]वृत्रहा शशः ।
द्वेषोयुतः सनुतर ऊर्ध्वसानोऽन्तराभरः ।
रंहिः प्रत्वक्षसो हन्त्वः शौरदेव्या जिगीषवः ।
अभिष्टिशवा नृतमो वीरेण्यश्चोग्र एव च ।
वितन्तसाय्यः सहुरिस्तुम्रवीरा विभञ्जनुः ।
वृषायमाणोऽषाळहश्च याताहन्ता नवाधिकम् ।
शतं नामानि शूराणां ये चान्ये तादृशा इति ।

पूर्वंगत्वा पुरो योधः क्षेप्नुः क्षिप्रेषुरेव च ।

---

1. One syllable is missing.
2. One syllable is missing.
3. म.
4. One syllable is missing.

अस्ता शुध्वा वम्रधृष्णू आयुध्रीयोंध एव च ।
दश स्युर्योद्धृनामानि वव्राता समितिर्गणः ।
जग्मानीकं समृछे षट् स्तूपस्तेषां तु सप्तमः ।
वर्मास्त्रं वरूथं च द्रापिरत्कं च निर्णिजः ।
षट् स्युः कवचनामानि सत्रानः सादिनो मताः ।
अपगूळहं हिरुङ्गिण्यमपि रिप्रमकुध्य...[1]त् ।
गोपायत्यमपम्लुप्तं सनुत्यापीच्यसस्वराः ।
रहश्चाकुत्र सनुतस्तिरो गूढे चतुर्दश ।
आयुधं हन्म वृषभः पवीरं निघ्नवो वधः ।
पर्वतः फेनमद्रिश्च सृको वज्रं धनुस्त्यजः ।
कुलिशं बकुरं वाशी पविः शम्बस्तथासि च ।
अश्माशनिस्तन्यतुश्च तुजं स्त्रीगीत एव च ।
सिनमर्कं च तृपलमवर्तिर्वर्तनिः करः ।
मन्मदिद्युद्दशस्तीश्च त्र्यविका त्रिंशदायुधे ।
धनुर्हेतिर्धसचक्री वधस्नो वृक्ष एव च ।
जावयन्धनुषः सप्त बाणो बुन्द इषुः शकः ।
शर्याफलानसोऽक्तुश्च शरव्यापर्णत्री स्तथा ।
रुरुचीर्ष्णिप्रतिहिता लायो विद्युश्च सायकः ।
ज्र्णिर्यविः षोळशेषोः सप्तदश्यसना भवेत् ।
ऋष्टिरूर्मिः खादिरारा क्षद्म वाशी क्रिविर्दती ।
शोचिर्दात्रं सृणिश्चैव तथा वनधितिः परः ।
स्वधितिद्वादशैतानि वज्रनायुधवाचिनः ।
तेजनार्था शिला क्ष्णोत्रं भवेद्वाद्यं तु गर्गरः ।
ज्या गौः प्रकोष्ठत्राणं स्याद्धस्तघ्न इति शाकलाः ।
स्थिरं वीळु कळहश्चैव बाष्पमन्तर्गतं विदुः ।
लघुतुच्छयन्तकर्दभ्रं क्षुध्वर्भावर्भकः समाः ।
ध्रुवं स्थाः सनरं स्थातुर्जंगम्यच्च रथं तुरः ।
क्षिप्रं मक्षु त्रिषु श्वात्रं शी...[2]मज्रा भुरण्यवः ।
तूतुजिः शूधनास्तूर्णि द्रविणस्तृपलं द्रवत् ।
तुर्वणिस्तूतुमा भूर्णिस्तथा द्रप्सो मनोजुवः ।

1. One syllable is missing.
2. One syllable is missing.

तुरास्तथैव तूर्ण्यर्थो वातरंहाश्च जूर्णिती ।
दविध्वतं तूतुजानास्त्वरणिश्चुगदेव च ।
आशुहेमा तुरण्यं च तरुत्रोऽरमतिस्तथा ।
आशुस्पन्द्रस्तथा हेत्वः क्षिप्रार्थो बृहती भुरिक्[1] ।
नवनूतननूत्नानि नव्यापूर्व्ये सनाच्चिरम् ।
प्रवयाः प्रदिवः प्रश्नः सनेमि सनयंस्तथा ।
पुराणं प्रथमं पूर्वमिति प्रत्नार्थवाचकाः[2] ।
निम्नं भरं गम्भरं च दश[3]प्रवणवाचकाः ।
इदेदानीं समानार्थौ तादीत्ना स्यात्तदासमः ।
महान्विरप्शी तविषो विहाया अभ्भृणो बृहत् ।
यह्वोऽमात्रोऽद्भु[4]तो वृद्धो विश्वव्यस्न्यः कुहयाकृतः ।
ऋभुक्षा माहिनो यक्षो गम्भीरमहिषोऽक्षिताः ।
ऋभ्वोऽभ्वो विभृतः स्फूरे दिविक्षा व्राधतो व्यचः ।
सत्रा महित्वं महिमा तवो सामि परीणसः ।
अविदस्ये गिरौकाश्च ककुहो वरिमा मही ।
मनः स्थूरोऽतिमानश्च सप्रथा महिना तथा ।
गम्भीरश्च भवीयश्च महतो वाचका इमे ।
महत्त्वस्यापि तेष्वेके चत्वारिंशत्रयश्च ते ।
शुक्रो दिवित्मा प्रुषितो दीद्दिविर्बभ्रुराघृणिः ।
द्युक्षः सुरोचिः सुद्योत्मा बाकुरो जञ्जणा भवन् ।
भाऋजीको पाकचक्षा अरुणः कल्मलीकिनः ।
ऋभुर्ज्योतिर्जरायुश्च त्विषितं शुचयस्तथा ।
अभिद्यवः शुचन्तश्च घृतनिर्णिक् तथापरः ।
ऋभ्वा तथा सुसंकाशा गायत्रा [5]दीप्तिवाचिनः ।
ऋकायमाणो बृकतिर्जिज्यासन् हिंसकास्त्रयः ।
कक्षमाणश्चतुर्थः स्याज्जिग अस्तरुताचरन् ।
त्रयोऽध्वगा भवन्त्येते त्राता गोपास्तथावनिः ।
अवसस्तन्तुवायः स्यात्परिज्मयोंस्त्रिकास्त्रयः ।

---

1. 37.
2. Number is not given.
3. There are not ten words.
4. द्रु.
5. 24.

गोपालवाचिनोऽमी स्युरन्त्यूती रक्षको भवेत् ।
सम्राड्राज्यं प्रसन्ता च वसवानस्तथैव च ।
रथ्यश्चेश्वरनामानि समाप्तः पार्थिवो गणः ।
अन्तरिक्षं पृथिव्याप ऋतयो निर्नभो रजः ।
नाकः समुद्रं कृन्तत्रं व्योमधन्वाम्बरं च...[1] ।
ऋतस्य सानुप्रदिवि सगरो निण्युरेव च ।
विधर्म पांसुरं चैव सलिलं द्यौस्तथा पदम् ।
अन्तरिक्षस्य नामानि भवन्ति द्वे च विंशतिः ।
उरु विश्वं तु विपुरु सहस्रं व्याशनिः शतम् ।
भूरिपूर्वी कुविच्छश्वदयुतं बहुलं बहु ।
विश्वायुराभु बंहिष्टं बहुव्योप्त्यर्थ वाचिनः[2] ।
दिश आशाः ककुप्काष्ठा हरितो दापरा इति ।
रश्मयः किरणा गावो भानुरर्चिर्मरीचयः ।
कृपा वपूंषि धामानि भासः केशा गभस्तयः ।
सप्तर्षयोऽशवो द्यावो नामोस्राः समिधः स्पशः ।
अयास ऊर्मयो भर्ग आतपो वक्षथो रजः ।
रोचिः सुपर्णा द्युम्नानि वसवः पायवो नरः ।
जुह्वः पाजो दीधितयो वाश्यः खेदो हरो घृणिः ।
अरुर्वनानि वस्त्राणि शुष्माः पन्था अभीशवः ।
अनीकं वसनं चक्षुरनवः शोचिरुस्त्रियाः ।
सुपा द्रप्सा मयूखं श्रीर्विद्युतो देवहूतयः ।
अक्तवो जन्तवः सूर्मीर्धीतयो भ्राज ऊजवः ।
इषोऽज्रा आशवो रोका ऋकाणः प्रसितिर्भ्रमाः ।
पथ्याः श्लोकास्तविष्यः पट् त्विषो भामोऽसुराश्विनः ।
सुचेतुः शरणाः सर्गाः पवयोऽर्कस्तपुर्वरः ।
ज्योतिः पवित्रं त्रिषणे हेषो हेतिर्जयः सदः ।
स्वः श्वेतनं महो ध्वस्म विशश्चक्षश्च केतवः ।
वृजन्यश्च सुषुम्नश्च यन्त्राण्येवश्च रोचनम् ।
वाशी द्योतम तथाजिह्वाः शक्मा आश्वक्ष...[3]न्तथा ।
दशकं शतमेतानि रश्मिनामानि शाकलाः ।

1. One syllable is missing.
2. Number is not given.
3. One syllable is missing.

रूपं वर्पो मतिः पेशो वत्सो निर्णिग्वपुः प्सरः ।
अर्कं प्रतीपं धादस्तु रूपे द्वादश कीर्तिताः ।
श्वेतः शुक्रो रुचश्चेति त्रयः शुक्लस्य वाचकाः ।
तमो ध्वान्तं तथा कृष्णं वर्तनिर्बहुलान्धसी ।
तमसो वाचकाः षट् स्यु र्मरुतः स्वयंजो नरः ।
सनीळा एवयावानो रुद्रा ऋकाण ऊतयः ।
उग्रा वराहा निजतो विश्वेदेवा उदप्रुतः ।
गणो वृषाणः शुचयो रुद्रिया गृर्तयो मघाः ।
स्वेदाञ्जयो युवानश्च परिज्ञा च वराहवः ।
उपशाकास्तथा विप्राः पृश्नेः पुत्रास्तुरा अपि ।
गोजाताश्च तथा वृष्ण्या सत्वयावान एव च ।
मरुतां त्रिंशदेकं च नामधेयानि शाकलाः ।
वायुरिन्द्रसखा श्वेतो जामाता त्वष्टुरेव च ।
विः पञ्चहोता रिबिति सप्तैते वायुवाचकाः ।
इन्द्र आखण्डलः शक्रो वृष्णिर्हरियोजनो वृषा[1] ।
हर्यश्वो वृत्रहा सिध्मः पुरुहूतः पुरन्दरः ।
उग्रो हंसश्रितः शूरो वज्रबाहुर्ऋतस्तथा ।
सहस्रमुष्को मघवा वीरः शासस्तथा हरिः ।
हरिवानथ गार्ष्टेय आशुः शृङ्गवृषो नपात् ।
वज्री संक्रन्दनो मेष एकवीरः शचीपतिः ।
ग्रोत्रभिच्चेन्द्रनामानि भवन्त्यानुष्टभानि[2] नः ।
उषाः पुनर्भूर्युवतिर्भास्वती सूनृतावरी ।
ऋतस्य योषा योषा च शुक्रा चित्रा विभावरी ।
मघोनिरुशतीः श्वेत्या शश्वती द्योतना मही ।
अर्या सुम्नावरी जैत्री धनुत्री नव्यसी स्वसा ।
विभारुणस्पुरहना दक्षिणा त्राश्च नूनृता ।
नारी दिवश्च दुहिता वधूश्चन्द्राग्रनी......[3] ।
आरुणी सूनरीश्वेत्या वाजिनी चाङ्गिरस्तमा ।

---

1. One extra syllable is in the pāda.
2. 28.
3. Two syllables are missing.

उच्छन्त्युषास्तथा वासो युगार्चाक्तुस्तथोदितः ।
ऋतः सुसदृशश्चेति पङ्क्तिः पञ्चाधिको[1]ऽस्रः ।
अह्र्यौः स्वसरं घ्रंसो दिनमुस्रा दिवो दिवा ।
वस्तोश्च वासरं भानुर्घृणं वास उषा इति ।
चतुर्दशाह्नो नामानि ह्यो गतं श्वस्त्वनागतम् ।
अद्यास्मिन्नहनीत्यर्थे सदा नित्यं दिवो दिवे ।
रात्रीश्यावी क्षपा नक्तं शिरिणोर्म्या च शर्वरी ।
त्रिरश्मिरक्तुनकृष्णी मेकी दोषा तमः क्षपः ।
असक्निः परितक्म्या[2]थ रक्ता मर्त्या च निम्रुचः ।
रमा राम्या तमिस्रा च वस्वी हिम्या हिमोषसः ।
अवर्यश्चित्रकृष्णे च रात्रिरेकाधिका विराट्[3] ।
नक्तोषासा तथा मेने क्षपा यव्या पतत्रिणी ।
युगानि च स्वसरौ च नक्ता चैवाहनी तथा ।
समानबन्धू धर्मौ च वाचकाः[4] स्युः समस्तयोः ।
संवत्सरः सप्तचक्रः शरद्वत्सश्च बभ्रयः ।
पञ्चारो वृषपर्वा च त्रिनाभिर्वत्सरो हिमाः ।
त्रिपाजस्यश्च वृषभस्त्रिचक्रः परिवत्सरः ।
अजो धाता द्वादशारो दश पञ्च च वत्सरे ।
तस्मिन्मासा द्वादश स्युरुपजातस्त्रयोदशः ।
ऋतवः पञ्च षट् सप्त त्रयो वा गुणयोगतः ।
तस्य पुत्रा अहोरात्रा अस्यवामीय ईरिताः ।
बहुधा चास्यवामीये[5] सोऽयं संवत्सरः स्तुतः ।
पक्षी पतत्री च पदिर्मार्ताण्डः शकुनो वयः ।
द्विजस्तथैव शकुनिः पक्षिणामष्टवाचकाः ।
निशागर उलूकः स्यादुलूकेत्यपि चापरे ।
आतिर्ह्रस्वि सखा हंसः क्ष्विङ्क्षा वृषरवः शुकः ।
कर्करिश्चिच्चिकश्चाषो निहाकाकि किदीवयः ।
कृकदाशुर्गृध्रकङ्कौ तद्विशेषा मता इति ।

1. 45.
2. क्य.
3. 31.
4. Number is not given.
5. RV. I. 164.

मुक्षीजा प्रसितिः सेतुर्वारणा गरुरंहतिः ।
मृचा जालस्य सप्तैते वाचका इति शाकलाः ।
अभ्रं गोत्रं विमुक्रोशः सवृष्टिः पर्वता मिहः ।
उन्सः कवन्धः उपरश्चरुरोधोऽब्दिमान् ययिः ।
अर्णवः फलिनः पौरो वराहः शम्बलो वलः ।
अद्रिर्गिरिः ससः सस्निः कुणारुः कल्प...[1]मृगः ।
अहिर्वृत्रः परिषदो द्रोण्यश्चेलीविशौदनाः ।
अश्मा वृषन्धिः पर्शानो मेघोऽश्मा रोहिणो इतिः ।
मिहो नपाच्च वृषभो दिवः सूनुस्तथैव च ।
पर्जन्यस्त्रैष्टुभा[2] मेघास्तोळिह्विद्युत्समाविति ।
कुम्भो मानस्तथैवाप्स उदधिश्च समा इति ।
पूर्णमुघ्धं समावेतौ...[3]कुरिक्तं प्रचक्षते ।
देवा यजत्रा अमृता हविष्मन्तो भुजः सहाः ।
अग्निजिह्वा नरः सोम्या वसवो वह्नयस्तथा ।
दैव्यो जनो रेणवश्च स्वर्दशश्च तथोशिजः ।
देवाः पञ्चादशैते स्युर्लोकाश्चैव रजांसि च ।
धामानि चेति लोकानां त्रयः स्युर्वाचका इति ।
नक्षत्रमृक्षा ज्योतींषि स्तरश्चित्रं समा इति ।
माश्चन्द्रमा वृषो मासस्तेषां सोमस्तु पञ्चमः ।
अग्निस्तनूनपाद्रुद्रो जातवेदा वनस्पतिः ।
रोहिदश्वो नराशंसो......[4]वैश्वानरोऽङ्गिराः ।
हव्यवाड्भरतो वह्निः शोचिष्केश ऋतः सिमः ।
वीतिहोत्रो गृहपतिः कृष्णजंहा वसुः कविः ।
ऋबीसो घृतपृष्ठश्च श्वेतो दूतस्तथा त्रितः ।
षड्विंशतिर्भवन्त्यग्नेस्त्वष्टानावांस्तथाघृणिः ।
विश्वरूपश्च चत्वारस्त्वष्टुः स्यु वाचका इति ।
रुद्र उग्रः शुचिर्वङ्कुर्बभ्रुस्तिग्मायुधः श्वितीक् ।
जलाषभेषजे रूपः स्थिरधन्वा त्रियम्बकः[5] ।

1. One syllable is missing.
2. 44.
3. One syllable is missing.
4. Two syllables are missing.
5. The word should be त्र्यम्बक.

भिषक्तमो वास्तोष्पतिः कपर्दी मरुतां पिता ।
भरतो रुद्रनामानि षोळशैतानि वैदिकाः ।
वरुणादित्यकवयः सम्राड्राजा धृतव्रतः ।
असुरो मेधिरो देवः प्रचेताश्च समुद्रियः ।
द्वादशो वृषभस्तेषां पर्जन्योऽथ महाधनः ।
अनागो वृषभश्चैव दिवस्पुत्रः समा विति ।
अंशुः पुष्करिणी च द्वौ सरसीवाचका इति ।
बृहस्पतिर्गणपतिः सप्तास्यो ब्रह्मणस्पतिः ।
आङ्गीरसो नीलपृष्ठः सप्तगुश्च बृहस्पतेः ।
यमो वैवस्वतो मृत्युर्वेधा राजा तथाहनाः ।
दुरितं दुर्गहा दुःखं विष्पितं दुःखवाचिनः[1] ।
मित्रो राजाथ सुक्षत्र आदित्योऽयातयज्वनः ।
पूषाजाश्वः कपर्दीच पुरन्धिश्च तथाघृणिः ।
हिरण्यगर्भः को राजा गतमश्च प्रजापतिः ।
विश्वकर्माविता धाता हिहायोऽजः समा इति ।
तार्क्ष्यः श्योनोऽरिष्टनेमिः सुपर्णो विर्मनोजवः ।
मन्युः स्वयंभूः सहुरिर्मन्योः स्युर्वाचका[2] इति ।
सवितायोहनुर्देवः सुपर्णो भग पतशः ।
विश्वानरस्तथा सूर्यो विप्रो देवः समा इति ।
हिरण्मयानि सर्वाणि तस्याङ्गान्यृषयोऽब्रुवन् ।
हस्तो जिह्वाचाक्षिणीच देवाश्चास्मिन् प्रतिष्ठिताः ।
ऋभुर्विभ्वा च वाजश्च त्रयः पुत्राः सुधन्वनः ।
नामानि तेषामृभवो वाजरत्नाश्च सूरयः ।
अनिःशस्ताः सुहस्ताश्च नपातः शवसश्च ते ।
सौधन्वना ऋभुक्षाणो वाजाश्चेति प्रचक्षते ।
पितरोऽङ्गिरसः सोम्या नवग्वा यज्ञियास्तथा ।
पूर्वे तथा दशग्वाश्च सप्तैतेऽङ्गिरसामिति ।
अश्विनौ धिषणौ धिष्ण्या नासत्या रोदसी तथा ।
माध्वी दस्रा पुरुभुजा भुरणौ च करौ नरौ ।
ऋतावृधौ च करणौ तथैव च शुभस्पती ।

1. Number is not given. 2. Number is not given.

अश्विनोर्नामधेयानि दाशतय्यां चतुर्दश ।
द्यावापृथिव्यौ धिषणे इमे धृतवती तथा ।
उर्वी पृथ्वीत्यृचो[1]क्तानि देवी ओण्यौ चमू इति ।
ऋतावरी गभीरे च पितरौ रजसी तथा ।
मही अपारे युवतिर्मातरा विश्वशंभुवा ।
असश्चन्ती भूरिधारे सुकृते रोदसी तथा ।
सिचौच क्रन्दसी चैव ऋक्[2]स्याद्घृतवती इति ।
सूर्यो वृषाजरो नाको गौर्गन्धर्व इनो हरिः ।
अह्नां केतुरिन्द्रसूरौ पूषाजः सविता भगः ।
नक्षत्रो भरतो ज्योति र्ब्रध्नः स्वः पलितोऽमतिः ।
विश्वानरः सप्तनामा विवस्वानरुणः शुचिः ।
सुपर्णो ...[3]रुग्मौ च सरस्वांस्तरणिस्तथा ।
श्वेतः पतङ्गः शुन्ध्युश्च जातवेदाश्च वायसः ।
भास्वानमर्त्यो दूरेदृगात्मा जीवस्तथारतिः ।
अर्को विभ्राट् तथायुर्गो धाता आदित्य एव च ।
आदितेयस्तथा विष्णुर्ब्रह्मा हंसोऽतिजागतः ॥

इति नामानुक्रमणी समाप्ता[4]

---

1. RV. I. 185·7.
2. RV. VI. 70·1.
3. Two syllables are missing.
4. Although I find this in the transcript on which the edition is based, it looks as though the nāmānukramaṇī is not finished.

# CORRECTIONS.

Read.

ii. 6. *a*. पावक रोचिषा
I. iii. 7. *a*. यदि द्वन्द्व
8. *d*. उप ह्वये
10. *c*. द्वन्द्वे
*d*. दर्शनात् (?)
14 *a*. त्वोऽव्ययी
18. *d*. स्य विग्रहः
20. *c*. उरुरस्तिक्रमो
iv. 2. *a*. विश्वशब्द
3. *c*. अग्निश्च
6. *b*. स घा. (correct app I. also).
v. 1. *b*. गृह्णाति
6. *d*. वामन्देवः
vi. 9. *b*. प्रागाख्यातार्थनिर्णये
vii. 3. *c*. कास्या
5. *a*. वरिमा
*c*. अन्वादेशः पूर्वं
viii. 5. *c*. मिन्द्रो अस्तु
II. i. 2. *c*. तन्नाम
5. *d*. क्रियाङ्कुर्वन्ति
9. *c*. प्रवृत्तेऽविरते
11. *a*. प्रति त्य
*b*. ह्वयसे
*c*. विमन्यवः
18. *b*. वि राजति
21. *c*. त्से जयन्ति
24. *b*. ईङ्खयन्ति
ii. 1. *c*. र्वि चक्रमे
3. *b*. दिवा दृष्ट
8. *a*. सृजन्तो

iii. 2. *d*. समधत्त
3. *c. d*. सिन्धुमावदन्नुपातिष्ठन्त
10. *c. d*. मस्योग्रन्निधातु
12. *d*. युक्त परा
21. *b*. दिकः
iv. 2. *ab*. स्पृहयेत्पृणी
4. *d*. पूर्वां व्यापारणां
6. *b*. विद्यात्सहऋषिभिः
v. 1. *c*. परि वृन्धि
vi. 1. *a*. लूट्ट स्तविष्यामि त्वा
9. *c*. अध्यायादि
vii. 3. *c*. यस्ते
viii. 3. *d*. मीळे
4. *c*. यैल्लात्प्र
III. i. 3. *b*. गृथग्वृथक्
*c*. हिरुक् श्रोषदरं बट् सु
5. *a*. दाशु व
*c*. बस्त्रि
*d*. माकीमार्कीं सनाति तात्
8. *a*. सह तिरं
13. *c*. स्फुटस्तदा
25. *d*. दृश्यते वापि
ii. 2. *b*. मघः स्वि
12. *a*. नान्येन (No. 13 according to re-numbering.)
iii. 20. *d*. वाचकः
iv. 3. *b*. नो वशः
7. *b*. मातिरः (Correct App I.)

## Read.

9. *d.* हरणं विदुः
12. *a.* एते सम्बोधनार्थीया
v. 3. *d.* सर्वेषूग्रहणं स्फुटम्
5. *b.* नुषो वाजं
vi. 1. *d.* ज्ञायेते तौ यथा पृथक्
12. *c.* तानि ह्या
vii. 16. *d.* म्बहुत्वान्न प्र
viii. 6. *c.* प्रप्र वो
9. *a.* सूर्यस्य रोचना
10. *c.* अव ते
11. *a.* अवपूर्वौ (Correct App I.)
IV. i. 5. *b.* नराः
6. *c.* पारुच्छेपीषु
13. *d.* नु दृश्यते
21. *b.* तुम्बुधाः
26. *b.* कुलोद्भवः
iii. 13. *a.* बू नु वा
iv. 2. *c.* विधेऽनु
v. 4. *b.* मीळेपद
vi. 6. *d.* तस्माद् द्वौ
10. *b.*, र्थाविदू
vii. 1. *c.* वेदे तु
4. *d.* नेति माधवः
6. *b.* तमाविति
viii. 8. *a.* अत्राहुः
V. i. 5. *a.* गर्तै वा
*b.* पात्यते
11. *c.* अर्चनानाश्च सूक्तान्ते
26. *d.* शौनकः
27. *b.* प्र वव्रे
*c.* तमु त्वा
ii. 14. *d.* कठ
iii. 13. *c.* वैश्वानराय
15. *c.* ह्यग्निः
22. *c.* ददर्शाभात्यग्नि
24. *c.* वाकसंस्थाने

iv. 10. *b.* न्त्याग्वित्यार्षं
16. *a.* प्रह्वाः
18. *d.* विनिर्णयः
v. 4. *b.* विभागो
5. *d.* मधुमत्तममन्त्रकृत्
9. *c.* प्रभृतिषु
11. *b.* व्यवस्थितः
17. *a.* वामदेव
19. *d.* श्रेयो
20 *a.* साध्यश्च नो
*d.* सिद्धान्तस्य
23. *b.* दृष्टचौ
38 *a. b.* यन्तसूक्तानां
vi. 8. *b.* वदन्ति तम्
15. *c.* एकार्षिकाणि
16. *d* भिद्यन्ते
vii. 17. *c.* स्मरन्त्यध्वर्यवो
23. *b.* स्मिन्नेहात्य
28. *d.* पठन्त्यध्वर्यवः
viii 15. (Brāhmaṇa) काण्वो
VI. i. 11. *c.* प्र वह
ii. 2. *b.* पुरउष्णि
11. *d.* र्दुहीयन्मित्र
iii. 3. *c.* कौष्टुकेस्तु
iv. 2. *a.* त्वमाय
vii. 4. *a.* चिकिद्धयस्य
9. *a.* अक्षरैः
13. *a.* प्रायोऽर्थौ वृत्तमित्येते
viii. 16. *c.* यदात्र नोदाहरण
18. *a.* अथाप्यर्थस्वभा
20. *b.* मवसान
22. *c.* अवसान
VII. i. 3. *d.* ते च न
iii. 5. *d* सम्प्रकीर्तिताः
v. 8 *c.* प्रयाजान्मे अनूयाजान्
*d.* सर्वान्द

# ABBREVIATIONS.

A. Adyar Library transcript.

AB. Aitareyabrāhmaṇa.

AM. Mādhava author of the Anukramaṇīs.

Ap. ŚS. Āpastambaśrautasūtra. (correct in V. ii. 18. Ap. II.)

ArAn. Ārṣānukramaṇī.

ArBr. Ārṣeyabrāhmaṇa.

AV. Atharvaveda.

BhG. Bhagavadgītā.

Bodh. ŚS. Bodhāyanaśrautasūtra (correct in V. ii. 14. App. II.)

BrD. Bṛhaddevatā.

Br Up. Bṛhadāraṇyakopaniṣat.

D. Manuscript of D. A. V. College, Lahore.

JB. Jaiminīyabrāhmaṇa.

KS. Kāṭhakasaṃhitā.

L. Manuscript of the Punjab University, Lahore.

M. Transcripts in the Government Oriental Manuscripts Library, Madras.

M. Bh. Mahābhāṣya.

N. Nirukta.

Ngh. Nighaṇṭu.

N. S. Nidānasūtra.

P. Palm leaf manuscripts from which M was transcribed.

Pa. Pāṇini.

PG. Ch. S. Piṅgala's chandassūtra.

RV. Ṛgveda.

RV. Pr. Ṛgvedaprātiśākhya.

SA. sarvānukramaṇī of Ṛgveda.

ŚB. śatapathabrāhmaṇa

SrAn. sarvānukramanī of the Ṛgveda.

SV. sāmaveda.

T. Trivandrum Transcript.

T. B. Taittirīyabrahmaṇa.

T. S. Taittirīyasaṃhitā.

T. S. S. Trivandrum Sanskrit Series No. XCVI.

Vi Pur. Viṣṇupurāṇa.

VM. mādhava son of Veṅkaṭārya.

VP. Vākyapadīya.

VS. Vājasaneyisaṃhitā.

---

ANANDA PRESS, MADRAS.